शास्त्राण्यस्मासु महतीमुपयोगितामवलम्बन्ते, तथाहि यदि राज्ये सकल-प्रजागणनियन्ता कश्चन राजा न स्यात्, प्रजानामपराधानुरूपदण्डप्रति-पादनं न स्यात्, स्वच्छन्दमेव च तासां व्यवहारो भवेत्, तदा जगदिदं एकेनैव वासरेण विलयपथमुपेयात्। प्रतिस्वस्यैव स्वार्थसम्पादनवासना-वशीकृतं विश्वमिदं परप्राणोपघातादिविधिभ्यः कुतो नु भीत्या विरति-मासादयेत्। तदेतत् सर्व्वं सम्यगालोच्य समीचीनमेवापदिष्टं मनुना धर्म्मशास्त्रे—"यदि न प्रणयेद्राजा दण्डं दण्ड्येष्वतन्द्रितः। शूले मत्-स्यानिवापक्ष्यन् दुर्ब्बलान् बलवत्तराः। अद्यात् काकः पुरोडाशं श्वावलिह्याद्धविस्तथा। स्वाम्यञ्च न स्यात् कस्मिंश्चित् प्रवर्त्तेताधरोत्तरम्॥" इति। "सर्व्वो दण्डजितो लोको दुर्लभो हि शुचिनरः। दण्डस्य हि भयात् सर्व्वं जगद् भोगाय कल्पते॥" इति च।

तदेवं जगति सुखं वस्तुकामैः कश्चिदेव नियमः समपेक्षणीयो, येन यथेच्छं प्रवर्त्तमानानामैहिकी पारत्रिकी च सम्पत् प्रलयपथे नोपतिष्ठेत, स एवास्माकं परमोपादेयो नैगमिकः स्मार्त्तश्च नीतिमार्गः। यच्च चार्व्वाकैरपि चार्व्वाकशास्त्रं प्रमाणतया स्वय्यते, तदपि, तथैवाविशेषेण समाजादिविप्लवसम्पादकमिति स्वाभिमतैहिकसुखविरोधित्वादेव परि-वर्ज्जनीयम् प्रेक्षावताम्। एवं विचारे मोक्षानन्तरमावृत्तः केनाप्य-नङ्गीकारेण मरणस्य मोक्षताभ्युपगम एव तेषां सर्व्वानर्थमूलतामाश्रय-तीति प्रतिभायात्।

तत्रापि मते मोक्षस्वरूपनिर्णये द्विविधं स्वरूपमुपलभ्यते, केचित् प्राणवायुनिवर्त्तनापरपर्य्यायं (१) मरणं मोक्षमातिष्ठन्ति; केचिच्च

---

(१) उक्तं हि भगवच्छङ्करपादैः—"मोक्षस्तु मरणं तच्च प्राणवायुनिवर्त्तनम्।" (सर्व्वसिद्धान्तसंग्रहे)

देहोच्छेदमेव (२) मोक्षमुद्घोषयन्ति। तत्रापि कार्य्यकारणयोरैक्य-विवक्षायां समाधानं कर्त्तव्यमिति हृदयम्। तत्र उभयत्रैव मते समा दोषसङ्घटना।

बौद्धानां प्रस्थाने तदपेक्षया कश्चित् समुत्कर्षो दृश्यते, तेषां जन्मान्तरादिस्वीकारात् पापकृत्यविश्रामात् तथा समाजविप्लावकत्वाद्यभावाच्च। ते हि भिक्षया जीवनं सुविशुद्धं यापयन्ति, परान् स्वार्थसिद्धये नोपतापयन्ति। आत्मदोषापसारणाय सुतरां कामयन्ते. कृत्तिं कमण्डलुं मौण्ड्यं चीरं पूर्व्वाह्णभोजनम्। सङ्घं रक्ताम्बरत्वञ्च बौद्धभिक्षवः समाश्रयन्ति, तत एव तेषां विलासव्यसनशून्यताया अभावः सुतरां प्रतिभासते। आध्यात्मिकोन्नतिकामा एव ते प्रत्यहमहमहमिकया सत्कृत्येषु शान्तिमयेषु प्रवर्त्तन्ते, अत एव तेषाम् उपदेशो दृश्यते महावस्तुप्रभृतिग्रन्थेषु यथा—'एवं सत्त्वा अष्टसु महानरकेषु षोड़शोत्सदेषु विविधानि दुःखसहस्राणि प्रत्यनुभवन्ति। तस्माज् ज्ञातव्यं प्राप्तव्यं बोद्धव्यम् अभिसंबोद्धव्यं कर्त्तव्यं कुशलं कर्त्तव्यं ब्रह्मचर्य्यं न च वा लोके किञ्चित् पापं कर्म्म करणीयं इति वदेसि।' इति। ते हि पापं पुण्यं च विश्वसन्तः गुरुजनेषु गौरवं न विस्मरन्ति। दश कुशलान् कर्म्मपथानुपसेवन्ते, तथागते न दोषं भावयन्ति, वृक्षपत्रादिकमपि न उपघ्नन्ति। आपत्सु विषादं वृद्धिषु वा नातिमोदमाश्रयन्ते (१)। तत्र हि वेदादि-

---

(२) देहोच्छेदो मोक्षः—( सर्व्वदर्शनसंग्रहे माधवाचार्य्येण )

(१) उक्तं महावस्तुग्रन्थे—"मातरं पितरं चैवाप्यर्हन्तं तथैव च। जीविता न विरोपेन्ति बोधिसत्वा महायशाः। संघञ्च ते न भिन्दन्ति न च ते स्तूपभेदकाः। न ते तथागते चित्तं दूषयन्ति कथंचन। न ते पापानि सेवन्ति विपरीतार्थे दृष्टिये। ... ... ... यस्य वृक्षस्य छायायां सौदन्ति च शयन्ति च। न तस्य पत्रहिंसा च न घातेन्ति च रोषिताः। दशकर्म्मपथां कुशलां सेवन्ति पुरुषोत्तमाः। न च मन्त्र

निरुक्तधर्मपथास्वीकारेऽपि धर्म्मशास्त्रानुमोदितानामेव अहिंसादिकानां मुख्यतया स्वतन्त्रेषु नियन्त्रणात् न चार्व्वाकाणामिव धर्म्मसमाजादिविध्वंसकारिता, एवं वैदिकाः सुयुक्तिसिद्धाश्च केचन विषया एव ते स्वतन्त्रस्वातन्त्र्यासंरक्षणाय निजतन्त्रेषु नोपादीयन्ते। तेषामात्मनित्यत्वादौ सत्यामपि सुतरां विप्रतिपत्तौ मुक्तौ विशुद्धविज्ञानसन्तानोदयादिरूपतास्वीकारेण ईश्वराराधनादिलक्षणास्तिकशास्त्रसम्मतक्रियाकलापवत् सुगतसेवनादीनामप्यङ्गीकारेण व्रतोपवासादिलक्षणाचारपरम्परावत् मौण्ड्यापूर्वाह्णभोजनादिरूपाचारग्रहणेन (२) आस्तिकमतसादृश्यमनेकत्र तन्मते समुपलभ्यते। मुक्तौ च ध्यानादिसम्पादितात्मस्वरूपावभासादिलक्षणमुक्तिसाम्यमनाकाङ्क्षितमपि सम्पतितमेव तेषां, तेन च विशेषतो न फलवैषम्यमस्य आस्तिकमतेन सम्पद्यते, परं अवान्तरविषयेषु यथा विवदामहे तथैव कर्म्मरूपसाधनमन्तरेण विशुद्धस्य वा अविशुद्धस्य वा ज्ञानसन्तानस्य उदयमनङ्गीकुर्वाणास्तन्मतं वयं प्रत्याचक्ष्महे। नहि ते सत्सु कर्म्मसु अन्येषु चार्व्वाका इव मरणं देहोच्छेद [illegible] सङ्गिरन्ते, येन तदुदयापत्तिः स्यात्। सर्व्वस्यैव च भावस्य क्षणिक[illegible] नित्यत्वमपि

---

प्रयोजेन्ति परस्य देहघातकं। कर्म्मसंनिश्रिताः सत्त्वाः कौतूहल[illegible]निःश्रिताः। पापतम् न [illegible] न च सीदन्ति हद्धिषु। (महावस्तु)। अन्यत्र सो अभिज्ञाय आख्यासि लोकानष्ट गौतमः। प्रत्यक्षधर्म्मा भगवां सर्व्वधर्म्मेषु चक्षु[illegible]। संजीवं कालसूत्रं च संघातं द्वौ च रौरवौ। अथापरा महावीचा तपनो च प्रतापनो। इत्येते अष्टौ निरया आख्याता दुरतिक्रमा।” (महावस्तु)। अन्यत्र च “दश कुशला कर्म्मपथा ये हि समादाय वर्त्तन्ति ते बोधाय समासन्नतरा भवन्ति।” (महावस्तु)

(२) उक्तं—“सो बोधिसत्त्वचर्य्यां सत्त्वानां हितसुखं गवेषन्तो समरति बोधिसत्त्वो लोकार्थं आत्मनोर्थं च। सो यं किञ्चिदेवं दानं शीलं समयं चोपवासं सेवति अप्रमत्तसर्व्वतन्तो लोकस्य हितं गवेषन्तो।” (महावस्तु)।

न शक्यं तद्द्वयस्याङ्गीकर्त्तुं संसारदशायां मुक्तिप्रसङ्गादिदोषोऽपि तमर्थं प्रतिबध्नातीति समासः।

आर्हतानां प्रस्थाने तु बौद्धप्रस्थानापेक्षयापि महानुत्कर्षः समुपलभ्यते, तथाहि ते वेदप्रामाण्यमनभ्युपगच्छन्तोऽपि वेदसिद्धानेव कतिचन पदार्थान् निजतन्त्रार्थतया प्रत्यपीपदन्, तद् यथा आत्मनः सुखदुःखादिभोगिनः स्थिरत्वम् (१) कृत्स्नकर्म्मविप्रमोक्षादिरूपो मोक्ष इत्यादि (२)। मुक्तस्य च ते परमानन्दानुभूतिं (३) मन्यन्ते। तदिदं मतं प्रायेण कतिपयास्तिकदर्शनमतमनुप्रविशतीवेति आस्तिकदार्शनिकानां पक्षे षट्सु अवैदिकदर्शनेषु तस्य समुत्कर्षः। कृत्स्नकर्म्मविप्रमोक्षो नाम सकलकर्म्मनिवृत्तिरेव। सत्येकस्मिन् अपि कर्मणि कृत्स्नकर्म्मनिवृत्तेरभावात् तदानीञ्च दुःखसाधनाभावेन दुःखस्यापि एकान्ततोऽसम्भवेन दुःखनिवृत्तेरप्यावश्यकत्वस्य निरुक्तप्रायत्वात् आस्तिकदर्शनसम्मता दुःखात्यन्तनिवृत्तिरेव फलतस्तत्स्वरूपमवतिष्ठते। येऽपि निरावरणतां मुक्तिमुपपादयन्ति, तेषामपि संसारहेतुभूतानामष्टविध—(४)

---

(१) "यद्यात्मा कश्चिन्नास्थायेत स्थायी तदापाह लौकिकफलसाधनसम्पादनं विफलं भवेत्। नह्य तत् सम्भवति अन्यः करोत्यन्यो भुङ्क्ते इति। तस्माद् योऽहं प्राक् कर्म्माकरवं सोऽहं सम्प्रति तत्फलं भुञ्जे इति पूर्व्वापरकालानुयायिनः स्थायिनस्तस्य स्पष्टप्रमाणावसिततया पूर्व्वापरभागविकलकालकलावच्छिन्नस्वलक्षणक्षणिकता परीक्षकैरर्हद्भिर्न परिग्रहार्हा।" ( सर्व्वदर्शनसंग्रहे )

(२) "बन्धहेत्वभावनिर्जराभ्यां कृत्स्नकर्म्मविप्रमोक्षो मोक्षः।" (तत्त्वार्थसूत्रम् १०१)

(३) "निरस्तदेहा गुरुदुःखपीड़िता" मित्यादि। ( अमितगतिश्रावकाचारे )

(४) उक्तं तत्त्वार्थराजवार्त्तिके—"संसारः पञ्चविधः, द्रव्यक्षेत्रकालभवभावपरिवर्त्तनभेदात्, तस्य कारणं कर्म्माष्टविधम्। तस्य विशेषेण आत्यन्तिकी निवृत्तिः संसारकारणनिवृत्तिः।" इति।

कर्म्मणामेव आवरणशब्दवाच्यतासम्भवेन तत्सामान्यशून्यताया एव मुक्तिस्वरूपताप्रतीत्या कृत्स्नकर्म्मविप्रमोक्षो नार्थान्तरम्। देहादेरत्यन्तवियोगरूपा मुक्तिरपि सकलकर्म्मप्रक्षयसापेक्षा, सति कर्म्मणि देहात्यन्तवियोगासम्भवात् अनुषङ्गसिद्धैव तन्मतेऽपि कृत्स्नकर्म्मविप्रमोक्षस्यैव मोक्षरूपता, एततोऽर्द्धगतिलक्षणापि मुक्तिः सर्व्वकर्म्मप्रहाणमन्तरेण असम्भवा कार्य्यकारणयोरभेदोपचारेण तन्मतान्न भिद्यते। तदयं पक्षो निरतिशयनित्यसुखाभिव्यक्तिसहितदुःखात्यन्तनिवृत्तिपक्षाद्वा भगवदैश्वर्य्यसमानैश्वर्य्यरूपसार्ष्टिलक्षणमुक्त्यादिपक्षाद्वा 'ब्रह्मविद् ब्रह्मैव भवती'-त्यादिश्रुत्याविदितपरानन्दात्मकब्रह्मस्वरूपतालाभपक्षाद्वा नातिशयेन व्यतिरिच्यते इत्यापाततो युज्यते सम्प्रचारयितुम्। अत एव उक्तं तत्त्वार्थराजवार्त्तिके श्रीमद्भट्टाकलङ्कदेवेन—'कर्म्मविप्रमोक्षसामान्यात् सर्वेषां हि प्रवादिनां यां तामवस्थां प्राप्य कृत्स्नकर्म्मविप्रमोक्ष एव मोक्षोभिप्रेत इति आस्माकीनसमयाविरोधात् मोक्षकार्य्यं प्रति सम्प्रतिपत्ति'-रिति। यथा आस्तिकेषु केचन दार्शनिका मुक्तौ (७) ज्ञानकर्म्मणोरुभयोरेव समुच्चयेन कारणत्वमङ्गीकुर्व्वन्तः कर्म्मणामनुपयोगितां व्यावर्त्तयन्ति, तथैवैते सम्यग्दर्शनसम्यग्ज्ञानसम्यक्चारित्राणां सम्भूय मुक्तिजनकतामभ्युपेत्य बोधकर्म्मणोर्द्वयोरेव समुपयोगं वर्णयन्ति (८)। तदपि आस्तिकमतमेवानुप्रविशतीति स्पष्टम्।

---

(५) मोक्षस्तु न दुःखनिवृत्तिमात्रं अपितु नित्यसुखस्य आविर्भावोऽपि। (सर्व्वमत)

(६) सार्ष्टिः भगवदैश्वर्य्यसमानैश्वर्य्यं कर्तुमकर्तुमन्यथाकर्तुं समर्थत्वात्। (प्राचीनमुक्तिवादः)

(७) उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणां गतिः। तथैव ज्ञानकर्म्मभ्यां जायते परमं पदम्। (योगवाशिष्ठवैराग्यप्रकरणम्)

(८) हतं ज्ञानं क्रियाहीनं हता चाज्ञानिनां क्रिया। धावन् किलान्धको

एवं रीत्या विचारे प्रस्तुते निरुक्तेषु षट्सु अवैदिकदर्शनेषु जैन-दर्शनमेव सर्व्वथा प्रशस्तिमर्हतीति नोक्तमप्युपतिष्ठते। तदयं समासो मुक्तिप्रभृतिकर्माधिकृत्यावैदिकदर्शनानां। अवैदिकदर्शनेषु सत्स्वप्यवान्तर-भेदेषु (१) पुत्रात्मवादादिषु ग्रन्थगौरवभयादेव मौलिकभेदमात्राण्युपा-दाय एव विरमामः।

अथेदानीं कानिचन वैदिकदर्शनमतान्यालोच्यन्ते। तत्रादौ सम-द्दिष्टेषु षट्सु वैदिकदर्शनेषु वैशेषिकापरपर्य्यायं काणादमेवाधि-क्रियते—काणादानाम् जीवात्मा परमात्मा चेति द्विविध आत्मा, तत्र जीवात्मा प्रतिदेहं भिन्नः, धर्म्माधर्म्मसमाश्रयः सुखदुःखभोक्ता। परमात्मा तु परमेश्वरापरपर्य्यायः सर्व्वज्ञः सर्व्वकर्त्ता सुखदुःखधर्म्माधर्म्मपरिशून्यः ज्ञानाद्यष्टगुणवान् कर्म्मणामचेतनानां नियमेन फलदाने सामर्थ्यशून्य-तया धर्म्माधर्म्मेणात्मनैव स्वं स्वं कर्म्मणि सुखे दुःखे च प्रतिव्यक्तिभेदान् नियन्तारं (२) कर्म्मफलदातारमङ्गीकुर्वते। जीवात्मा एव कर्म्मानु-सारेण फलभोगाय नरनारकसुरासुरयक्षगन्धर्व्वपिशाचराक्षसपशुपक्षि-कीटपतङ्गस्थावरसरीसृपादीनां शरीरमाश्रित्य तत्तत्कर्म्मफलमुपभुङ्क्ते। परमात्मा तु अशरीरी नित्यज्ञानेच्छाप्रयत्नगुणकः सर्व्वमिदं जगति लीलावशाज्जीवकर्म्मानुसारेण सृजति व्यवस्थापयति काले च प्रलयं सम्प्रापयति। वेदास्तेनैव परमात्मना लोकोपकाराय विनिर्म्मितास्तदा-

---

दग्धः पश्यन्नपि न पङ्गुलः। संयोगमेवेह वदन्ति तज्ज्ञाः न ह्येकचक्रेण रथः प्रयाति। अन्धश्च पङ्गुश्च वने प्रविष्टौ तौ संप्रयुक्तौ नगरं प्रविष्टौ॥ (तत्त्वार्थराजवार्त्तिके)

(१) "अतिप्राकृतश्चार्व्वाकस्तु पुत्रे पुष्टे नष्टे च ... ... पुत्र एवात्मा।" इत्यादि (वेदान्तसारः)

(२) 'स एव कर्मफलदो जीवानां पारिशेष्यतः।' (सर्व्वसिद्धान्तसंग्रहः)

ईशसंज्ञां (३) भजन्तः सुकृतविधौ दुष्कृतनिषेधे च प्रामाण्यमुपगच्छन्ति । तत्र प्रकृष्टात् स्वल्पाधर्म्मानुविद्धप्रवर्त्तकधर्माद्विदुषां रागद्वेषशालिनामात्मनां कामनानुरूपं ब्रह्मेन्द्रप्रजापतिपितृमनुष्यलोकेषु इष्टशरीरेन्द्रियविषयसुखादिभिर्योगः, स्वल्पेन धर्म्मेणानुविद्धात् प्रकृष्टादधर्म्मात् प्रेततिर्य्यग्योनिषु अनभिमतशरीरेन्द्रियविषयदुःखादिभिः समागमो भवति । एवं हि नाम प्रवृत्तिलक्षणाद् धर्म्माधर्म्मसमन्वितात् देवमनुष्यादियोनिषु पुनः पुनर्जीवस्य संसरणम् । दृष्टानुश्रविकेषु सर्व्वेष्वेव विषयेषु वितृष्णस्य च ज्ञानपूर्व्वकमेव फलाभिसन्धिराहित्येन यथानियमं कर्म्माणि अनुष्ठितवतः कर्म्मानुसारेण विशुद्धे कुले विशुद्धशरीरोपयोगिनि जन्म सम्पद्यते, तत्र च प्रत्यहं दुःखाभिघातमुत्प्रेक्षमाणस्य दुःखनिवृत्त्युपायजिज्ञासया गुरोरभिसरणेन कुतो नु खलु मे दुःखोपशम आत्यन्तिकः स्यादिति प्रश्नतः करुणावशीकृतमानसस्य गुरोः समीपतः षट्पदार्थतत्त्वज्ञानं श्रौतं सम्पद्यते । ततश्च क्रमेण मनननिदिध्यासनादिना समुपजाते आत्मप्रत्यक्षे सवासनविपर्य्ययज्ञाननिवृत्त्या रागद्वेषाद्यभावेन तज्जनितधर्म्माधर्म्मयोरनुत्पादे पूर्व्वसञ्चितयोश्चोपभोगेन सन्निरोधे निवृत्तिफलहेतुना कर्म्मान्तरेण परमार्थदर्शनजनिते सुखे सम्पन्ने अनन्तरं शरीरहेतुकर्म्मणामप्यभावेन शरीरात्यन्तवियोगात् अत्यन्तदुःखनिवृत्तिलक्षणो मोक्षः सम्पद्यते ।

एतन्मते प्रत्यक्षमनुमानञ्चेति प्रमाणद्वयं, अत एवोक्तं सर्व्वमतसंग्रहे 'प्रत्यक्षमेकं चार्व्वाकाः कणादसुगतौ पुनः । प्रत्यक्षमनुमानञ्च सांख्याः शब्दञ्च ते अपि ।" इत्यादि । अथैवं सर्व्वसिद्धान्तसंग्रहे वैशेषिकपक्षप्रकरणे 'त्रिधा प्रमाणं प्रत्यक्षमनुमानागमाविति ।" शङ्करवचनस्य

---

(३) 'तदाज्ञप्तक्रियां कुर्व्वन् मुच्यतेऽन्यस्तु बध्यते । श्रुतिस्मृतीतिहासाद्यं पुराणं भारतादिकं । ईश्वराज्ञेति विज्ञेया न लङ्घ्या वैदिकैः क्वचित ॥' ( सर्व्वसिद्धान्तसंग्रहे )

का गतिरिति चेन्न तदभिप्रायापरिज्ञानात्, तथाहि कणादमते अनुमानेन गतार्थतया आगमस्य पृथक्तया प्रामाण्यानङ्गीकारेऽपि तत्र प्रामाण्यस्याव्याहतत्वात् तथोक्तिर्न विरुध्यते। तथाहि तन्मते प्रत्यक्षत्वमनुमानत्वञ्चेति द्वावेव प्रमाणविभाजकोपाधी, न तु शब्दत्वमपि। परं शब्दस्य अनुमानप्रमाणान्तर्भावेन प्रामाण्याभ्युपगम इति ध्येयम्। अथवा कणादैकदेशिमतावलम्बनेन शङ्करवचनसङ्गतिरवधेया अन्यथा तथैव उपमानस्यापि प्रामाण्यस्वीकारप्रसङ्गात् त्रित्वेन विभागव्याघातप्रसङ्ग इत्यादि बहुतरमूहनीयम्। तैश्च प्रमाणैः सुविज्ञातः परमेश्वरः प्रसन्नतामनुप्राप्तः शरीरिणां मोक्षं सम्पादयति (१)।

अथैवं प्रकृततन्त्रे प्रमाणपरिगृहीतस्य परमेश्वरस्य मुक्तिहेतुत्वाभ्युपगमे 'यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्म्मः' इति 'धर्म्मविशेषप्रसूताद्द्रव्यगुणकर्म्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्म्यवैधर्म्म्याभ्यां तत्त्वज्ञानात् निःश्रेयसम्" इति च सूत्रविरोधः. मैवं निवृत्तिलक्षणधर्मादेव (२) मुक्तिरिति काणादसिद्धान्तः स्थिर एव, परं अचेतनस्य धर्म्मस्य स्वयं नियतविषये प्रवृत्तिसामर्थ्यविरहेण (३) तन्मते ईश्वरस्यानुग्रहमन्तरेण

---

(१) 'त्रिभिरेतैः प्रमाणैस्तु जगत्कर्त्तावगम्यते। तस्मात्तदुक्तकर्म्माणि कुर्यात् तस्यैव तृप्तये। भक्त्यैवावर्जनीयोऽसौ भगवान् परमेश्वरः। तत्प्रसादेन मोक्षः स्यात् करणोपरमात्मकः।' इति ( सर्व्वसिद्धान्तसंग्रहे वैशेषिकपक्षः )

(२) 'निवृत्तिलक्षणः केवलो धर्म्मः परमार्थदर्शनजं सुखं कृत्वा निवर्त्तते, तदा निरोधात् निर्वीजस्य आत्मनः शरीरादिनिवृत्तिः पुनः शरीराद्यनुत्पत्तौ दग्धेन्धनानलवदुपशमो मोक्षः।" इति ( प्रशस्तपादभाष्ये गुणग्रन्थे अपवर्गनिरूपणम् )

(३) "धर्म्माधर्म्मात्मकालौकिकपरलोकसाधने विप्रतिपन्नं प्रति तत्साधनम्, सिद्धे च तस्मिन् तदधिष्ठातृतया ईश्वरसिद्धिः, अचेतनस्य कारणस्य सचेतनाधिष्ठानेनैव कार्य्यजनकत्वात्।" ( कुसुमाञ्जलिहरिदासव्याख्या १।४ )

तस्य मुक्तिफलोन्मुखत्वासम्भवात् अपेक्षितो हि परमेश्वरानुग्रहः, (४) स चापि ईश्वरमननादिना ईश्वरसाक्षात्कारात्, मननादेश्च व्याप्तिज्ञानो-पधीनत्वात् व्याप्तिज्ञानादेश्च पदार्थविवेकसापेक्षत्वात् परम्परया एव पदार्थतत्त्वज्ञानं मोक्षहेतुरिति स्थितं भवति। तदिदं व्याकारि माधवाचार्य्यादिभिः सर्व्वदर्शनसंग्रहादौ स्पष्टमेव (५)।

भवतु यथा तथा वा, पदार्थतत्त्वज्ञानस्य साक्षाद्वा परम्परया वा यथा कथञ्चिदेव मोक्षहेतुतया सुतरामपेक्षणीयत्वेन सर्व्वत्रैवास्तिकदर्शने तत्त्व-ज्ञानमुपादेयमिति प्रवर्त्तते सुगभीरदुन्दुभिनिर्घोषः। परं यद्यपि प्रति-प्रस्थानमेव प्रायेण तत्त्ववैलक्षण्येन तत्त्वज्ञानस्य प्रकारभेदः सुतरामपो-हितुमशक्य एव, तथापि यथा भागीरथीसलिलावगाहनमभिलषद्भिः अनेकैरेव मार्गैरेका भागीरथी लभ्यते, यथा वा नानादिग्भ्यो नाना-मार्गैः प्रस्रवन्त्यः सरितः समुद्रमेकमभिगच्छन्ति, तथैव नानाविधप्रकार-भेदमाश्रितानामपि परमेश्वरसाक्षात्कारादिना परिप्राप्तेन परमपदलाभो नासङ्गतिं धत्ते, तदेवमध्यात्मविषये प्रवर्त्तते महानेव सामञ्जस्यमहिमा। काणादा अपि मोक्षे ज्ञानकर्म्मणोः समुच्चयेनैव हेतुतामङ्गीकुर्व्वते, तन्मते नहि मुमुक्षोरपि त्यक्तकाम्यकर्म्मणः नित्यनैमित्तिककर्म्मपरित्यागः, तथावस्थायामपि नित्यनैमित्तिककर्म्मपरित्यागिनां प्रत्यवायदोषस्य प्रशस्तपादभाष्यव्याख्यायां श्रीधराचार्य्यैरनुवादात्। मुमुक्षोरपि ब्राह्मण-त्वादिजातेरनुच्छेदेन तदनुगतकर्त्तव्यकर्म्मणामवश्यं तेनापि कर्त्तव्य-

(४) "धर्म्मोऽपि केवलं तावन्न निःश्रेयसं करोति यावदीश्वरेच्छया नानुगृह्यते, तेनेदमुक्तं ईश्वरचोदनाभिव्यक्ताद्धर्म्मादेवेति।" (प्रशस्तपादभाष्यव्याख्या न्यायकन्दली)

(५) "आगमेनानुमानेन ध्यानाभ्यासरसेन च। त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम्। इति, तत्र मननमनुमानाधीनं अनुमानञ्च व्याप्तिज्ञानाधीनं व्याप्ति-ज्ञानञ्च पदार्थविवेकसापेक्षमिति।" (सर्व्वदर्शनसंग्रहे औलूक्यदर्शनप्रकरणे)

स्यात्। न च तदानीं विशदभावमुपजातमात्मज्ञानमेव रागादिकं समुच्छिनत्तीति कुतो नु बन्धसम्भव इत्येव श्रुतिस्वरसादुपगम्यत इति वाच्यं, तत्त्वज्ञानस्य संशयविपर्य्ययादिसमुन्मूलकत्वेऽपि विहिताकरण-जन्यप्रत्यवायप्रतिरोधे सामर्थ्यस्य अदृष्टचरत्वात्, आत्मज्ञानस्य कर्म्म-निरोधकत्वस्वीकारे शास्त्रसिद्धजीवन्मुक्तिव्यवस्थाया एव सुतरामपलाप-प्रसङ्गात्। यदि च अभावस्य भावकार्य्यं प्रति केवलतया कारणत्व मसम्भवमुच्यते, तदा तु विहिताकरणसहकृतमन्यदेव भावरूपं किञ्चित् कारणमभ्युपेयम्। अतो विहिताकरणेन प्रत्यवायसमुत्पत्तेस्तस्य च बन्ध-कारणतया अन्यतो विरतिविरहेण प्रत्यवायनिरोधार्थं मुक्तिमभिलषता योगाभ्यासाप्रातिकूल्येन भिक्षाभोजनादिकमिव यथाकालं विहितकर्म्म-जातमनुष्ठातव्यम् तावदेव, यावदस्य नात्मतत्त्वं स्फुटमवभासमापद्यते; स्फुटमवभासिते चात्मतत्त्वे तावदेव जीवन्मुक्तः कर्म्म कुरुते, यावदस्य शरीरयात्रानुवृत्तिः, कर्म्माभावे शरीरयात्रानिष्पत्तेरसम्भवात्। परं विदेहकैवल्यप्रवणस्य निःशेषितकर्म्मणः सर्व्वाण्येव कर्म्माणि सुतरां विलुप्यन्ते। तथाहि यावन्तं कालं कर्म्मानुसारेण शरीरं धारयितव्यं तावत्कालानन्तरं शरीरधारणकर्म्मणा विनष्टे फलनाश्ये अदृष्टे तत्-कार्य्यभूतशरीरनिवृत्तेरवश्यम्भाविन तत्कार्य्यभूततत्त्वज्ञानस्यापि विलयात् आत्मनः कैवल्यमुपतिष्ठते, अत एव प्राप्तं कर्म्मणोऽपि मुक्तौ परमोप-योगित्वम्। तत्त्वज्ञानं अभ्यासवशादासादितप्रकर्षमेव मुक्तिमनुकूलयति, तत्प्रकर्षे च दुरितानां प्रतिबन्धकारितया नित्यनैमित्तिकैः कर्म्मभिरवश्यं क्षपणीयानि दुरितानीति। सर्व्वमिदं सविस्तरं न्यायकन्दल्यादौ द्रष्टव्यम्। सर्व्वेषामेव कर्म्मणां भोगात् क्षयः, न तु तत्त्वज्ञानेनापि; यश्च 'क्षीयते चास्य कर्म्माणि तस्मिन् दृष्टे परावरे' इत्यादिश्रुतयः ता अपि ज्ञाने सति अनागतानि कर्म्माणि न क्रियन्ते इत्यर्थाः, अत एव 'नाभुक्तं क्षीयते कर्म्म कल्पकोटिशतैरपि। अवश्यमेव भोक्तव्यं कृतं

कर्म्म शुभाशुभम्," इत्यादि सङ्गच्छते। परे तु प्रायश्चित्तनाश्यकर्म्मणां भोगव्यतिरेकेण नाश्यतावत् तत्त्वज्ञानानाश्यकर्म्मणामपि भोगव्यतिरेकतो नाशं मन्वानाः तत्रत्यकर्म्मपदानां तत्त्वज्ञानाद्यनाश्यकर्म्मपरतामङ्गीकुर्व्वन्ति। तदिदं सम्यगालोचितं गदाधरेण स्वयमेव मुक्तिवाद इति नेह प्रपञ्च्यते।

उदयनाचार्य्यास्तु किरणावल्यां कर्म्मणः सत्त्वशुद्धिद्वारेण आरादुपकारकत्वं, तत्त्वज्ञानस्य च सन्निपत्योपकारकत्वं ब्रुवते। न तु तुल्यतया तत्समुच्चयमपि (१)। यच्च मुमुक्षोः नित्यादिकर्म्माकरणे प्रत्यवाय इति तदप्ययुक्तं, तत्त्वज्ञानेन मिथ्याज्ञानरूपदोषाभावात् तत्प्रयोज्यरागद्वेषाद्यभावेन प्रवृत्तिविरहस्य अवश्यम्भावात्; अत एवोक्तं किरणावलीव्याख्यायां वर्द्धमानोपाध्यायपादैः—'सत्त्वविकारे सति नित्यस्य

---

(१) 'एतेन सत्त्वशुद्धिद्वारेण आरादुपकारकं कर्म्म सन्निपत्योपकारकञ्च तत्त्वज्ञानमिति मन्तव्यम्। न तु तुल्यकक्षतया तत्समुच्चयः। नापि ज्ञानेन धर्म्मो जन्यते विहितत्वादिति धर्म्मस्यैव प्राधान्यम् दृष्टद्वारेणैवोपपत्तावदृष्टकल्पनानवकाशात् अन्यथा भेषजादिविधिष्वपि तथा कल्प्येत। उपपत्तिविरुद्धश्च ज्ञानकर्म्मसमुच्चयः। काम्यनिषिद्धयोस्त्यागादेव समुच्चयानुपपत्तेः। नापि असङ्कल्पितफलकाम्यकर्म्मसमुच्चयः चतुराश्रमविधिविरोधात्। यावन्नित्यनैमित्तिकसमुच्चयस्यापि तत एवानुपपत्तेः। यत्याश्रमविहितकर्म्मणा ज्ञानस्य समुच्चय इत्यपि नास्ति तदभावेऽपि गृहस्थस्य ज्ञाने सति मुक्तेः। यतः स्मरन्ति हि—कर्म्मणैव हि संसिद्धिमास्थिता जनकादयः। इति। न्यायागतधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः। श्राद्धकृत् सत्यवादी च गृहस्थोऽपि हि मुच्यते।" इति (किरणावली)। 'तत्त्वज्ञानमेव निःश्रेयसहेतुः, कर्म्माणि तु अनुत्पन्नज्ञानस्य ज्ञानार्थिनः तत्प्रतिबन्धकाधर्म्मनिवारणद्वारेण प्रायश्चित्तवदुपयुज्यन्ते। उत्पन्नज्ञानस्य तु अन्तरा लब्धवृत्तेः कारीरीपरिसमाप्तिवत् प्रारब्धाश्रमधर्म्मसमापनं लोकसंग्रहार्थमेवेति युक्तमुत्पश्यामः। (किरणावली)।

आवश्यकी कर्त्तव्यता, अन्यथा प्रत्यवायाधिक्येन अनपवर्गापत्तिरिति मतं तच्च दोषाभावेन नित्याकरणेऽपि प्रत्यवायानुत्पादात्, अत एव भोगार्थं प्रवृत्तावपि तस्य न धर्म्माधर्म्मोत्पत्तिः।" इति। तदिदं सिद्धं तत्त्वज्ञानमेव साक्षात् मिथ्याज्ञानविध्वंसद्वारा अपवर्गहेतुः, कर्म्म तु परम्परया चित्तशुद्ध्यादिकं विदधत् तत्त्वज्ञानानुकूल्येनैव इति। प्रतिपादितमिदं वर्द्धमानेन किरणावलीव्याख्यायां स्पष्टमेव (२)। अथेदानीं मुख्यं प्रकृतमनुसन्धीयते। ननु कोऽयं काणादमते मोक्षो नाम? यदर्थं कर्म्म वा तत्त्वज्ञानं वा समपेक्षणीयम् इति प्रश्नावतारे शङ्कराचार्य्यपादाः भक्त्या समावर्जितस्य भगवतः प्रसादेन करणोपरमात्मकं मोक्षं (३) ब्रुवते। अत्र सुखदुःखादिसमुच्छेदेन पाषाणसदृशत्वमात्मनः समुपतिष्ठते। तत्रायमभिप्रायः,—आत्मनो देहेन्द्रियादिसम्बन्धमन्तरेण ज्ञानसुखदुःखाद्यसम्भवात् यदैव सञ्चितप्रारब्धक्रत्स्नकर्म्मणां तत्त्वज्ञानसमुदयादत्यन्तविच्छेदस्तदनन्तरमेव दुःखात्यन्तनिवृत्तिरूपमोक्षदशा समन्विता भवति। तदित्थमविद्यादिनाशपक्ष इव करणोपरमस्यापि शक्यो मोक्षताव्यपदेशः कर्त्तुम्। अथैतन्नोपपद्यते सुखदुःखा भावितरत्वेन करणोपरमस्य मुख्यपुरुषार्थत्वाभावात् दुःखात्यन्तनिवृत्तिरूपमुक्तिप्राक्काले अमुक्तेऽपि मुक्तिव्यपदेशप्रसङ्गाच्चेति चेदुच्यते करणोपरमस्य दुःखात्यन्तनिवृत्तावुपयोगित्वेन मुक्तिं प्रति करणोपरमस्य कारणतायाः सर्व्वसम्मततया कार्य्यकारणयोरभेदेन प्रकृतग्रन्थनिरुक्तेः। अत एव अनन्तरं प्रभाकरपक्षप्रकरणे भगवान् शङ्कराचार्य्यः स्वयमेव—'करणोपमान्मुक्तिमाह वैशेषिको यथा,'—इत्यादिना करणोपरमादिति हेत्वर्थे पञ्चमीनिर्द्देशात् मुक्तौ

(२) तत्त्वज्ञानस्य मिथ्याज्ञानध्वंसो व्यापारो दृष्टचरत्वात् न तत्र तस्य कर्म्मसहकारित्वम्। विनापि कर्म्म तेन मिथ्याज्ञानविनाशात्। कर्म्मान्तराणां यमनियमादीनां तत्त्वज्ञानद्वारेण मोक्षहेतुत्वं सम्भवति साक्षात्त्वश्रुतेः।

करणोपरमस्य हेतुत्वमेवाभिप्रैति, न तु करणोपरमस्वरूपत्वं तस्याः। तदेवं सिद्धो दुःखात्यन्तनिवृत्तिरेव मोक्ष इत्येव काणादमार्गः अत एवोक्तं किरणावल्यामुदयनाचार्य्यैः—निःश्रेयसं पुनर्दुःखनिवृत्तिरात्यन्तिकी, अत्र च वादिनामविवाद एव' इति। "अहितनिवृत्तिरात्यन्तिकी महोदय इति युक्तम्" इति च न्यायकन्दल्याम् श्रीधराचार्य्यैः 'निःशेषदुःखोच्छेद एव मोक्ष' इति च सर्व्वमतसंग्रहे।

अथ यदि दुःखात्यन्तनिवृत्तिर्मोक्ष इत्येव सिद्धान्तः काणादानां, तत् किमिति सर्व्वसिद्धान्तसंग्रहे प्रभाकरपक्षविवरणे शङ्कराचार्य्यपादाः प्रसङ्गतः 'प्रयत्नसुखदुःखेच्छाधर्म्माधर्म्मादिनाशतः। पाषाणवदवस्थानमात्मनो मुक्तिमिच्छति।" इति काणादपक्षसिद्धान्तमुपन्यस्तवान्. तेन हि दुःखात्यन्तनिवृत्तेर्मुक्तिस्वरूपतापक्षविघटनमेव अनुषज्यत: अत भवेत् इति चेन्न तस्य सुकरसमाधानत्वात्; तथाहि यदैव सर्व्वकरणोपरमेण जीवानामात्यन्तिकदुःखविनिवृत्तिस्तदैव तत्र सर्व्वेषां ज्ञानसुखादीनामपि विशेषगुणानामेकान्ततो विलयेन पाषाणवदवस्थानं नियतमित्यसकृदुक्तप्रायम् तत् सर्व्वदुःखात्यन्तनिवृत्तेः पाषाणवदवस्थितेर्व्वा मोक्षस्वरूपतास्वीकारे नास्ति करणोपरमस्य मोक्षतापक्षवदप्रसङ्गादिदोषावतार इति ध्येयम्। एतदेवाभिप्रेत्य न्यायकन्दलीकारैरपि कदाचित् दुःखात्यन्तनिवृत्तेः, कदाचिद्वा सकलविशेषगुणोच्छेदसमुपलक्षितस्वरूपावस्थितेर्मुक्तित्वमुपदिष्टमुपलभ्यते (१)। अत

---

(१) "नास्ति चात्मनः नित्यं सुखं तदभावान्न तदनुभवो मोक्षावस्था, किन्तु समस्तात्मविशेषगुणोच्छेदोपलक्षिता स्वरूपस्थितिरेव।" (न्यायकन्दली)। 'मोक्षे कर्म्मणि ऐहिकस्य देहस्य निवृत्तौ कारणान्तराभावादामुष्मिकस्य देहस्य पुनरुत्पत्त्यभावे सत्यात्मनः स्वरूपेणावस्थानमिति।" (न्यायकन्दली)। अन्यत्र च—'किं पुनरात्मनः स्वरूपं येनावस्थितिर्मुक्तिरित्युच्यते।" (न्यायकन्दली)।

एव सर्व्वमतसंग्रहे 'निःशेषदुःखोच्छेद एव मोक्ष' इत्यनन्तरं 'स च बुद्ध्यादिगुणान्तरसद्भावे न सम्भवतीति नवगुणोच्छेदलक्षण इत्याचार्य्यः कणादः स्मरती'ति सन्दर्भोऽपि नासङ्गतः। तत्र "स च बुद्ध्यादिगुणान्तरसद्भावे न सम्भवतीति" भागस्य युक्तिरूपतया समुपन्यासेन समाधानस्य सम्पादितत्वात् तथाहि—निःशेषदुःखोच्छेदः नवविशेषगुणोच्छेदश्चेति समनियतैव पदार्थद्वयी, तस्याश्च निःशेषदुःखोच्छेदनवविशेषगुणोच्छेदरूपाया ध्वंसरूपतया समनियताभावयोरैक्यमतमवलम्ब्य तथाभिधानस्य निर्द्दोषत्वसम्भवात्। यदपि स्वरूपावस्थानमात्मनो मुक्तिरिति दृश्यते, तदपि तन्पक्षतो नात्यन्तं भिद्यते, अभावानामधिकरणात्मकतामते तादृशध्वंसरूपाभावस्य आत्मस्वरूपानतिरेकात्। न च संसारकालीनात्मस्वरूपाभावे अतिप्रसङ्ग इति वाच्यं तद्दोषपरिजिहीर्षयैव नवगुणोच्छेदोपलक्षितेति विशेषणस्य अभावांशे परिग्रहात्।

न्यायसारे आगमपरिच्छेदे मुक्तिस्वरूपनिरूपणप्रसङ्गेन भगवान् भासर्व्वज्ञः"एके तावद् वर्णयन्ति समस्तगुणोच्छेदे संहारावस्थायामाकाशवदात्मनोऽत्यन्तावस्थानं मोक्ष" इति विज्ञापयति—तत्रायमर्थः वैशेषिकाणां मते आत्मा चतुर्द्दशगुणाधारः. तत्र पञ्च संख्यादिकाः सामान्यगुणाः बुद्ध्यादयः षट् धर्म्माधर्म्मौ भावनाख्यसंस्कारश्चेति नवविशेषगुणाः, यदा बुद्ध्यादयो विशेषगुणाः सर्व्वे समुच्छिद्यन्ते, तदा शिलाशकलकल्पस्य आत्मनः अत्यन्तावस्थानं सार्व्वदिकी स्थितिः, यथा प्रलयकाले आकाशविशेषगुणस्य शब्दस्य अत्यन्तोच्छेदात् केवलमाकाशं व्यवतिष्ठते तद्वदिति। अत एवोक्तं न्यायतात्पर्य्यदीपिकायां जयसिंहसूरिणा—'स्वरूपैकप्रतिष्ठानः परित्यक्तोऽखिलैर्गुणैः। ऊर्म्मिषट्कातिगं रूपं तदस्याहुर्मनीषिणः।" इति। तदेवं सुस्थितं दुःखात्यन्तनिवृत्तिर्व्वा समस्तविशेषगुणोच्छेदो वा समस्तविशेषगुणोच्छेदोपलक्षिता स्वरूपस्थितिर्व्वा मुक्तिरित्येतेषां कणादतान्त्रिकमतानां सुतरामवैषम्यम्,

स्वरूपविचारे आपाततो वैषम्यस्य भासमानत्वेऽपि पर्य्यालोचनया तदपगमात् ।

नैयायिकास्तु सर्व्वेषामेव जीवानामपवर्गदशायामत्यन्तदुःखनिवृत्तेरावश्यकत्वेन तदानीं सर्वतन्त्रसिद्धान्तभूतामत्यन्तदुःखनिवृत्तिमेव मुक्तिमङ्गीकुर्व्वन्तः परोपवर्णितमुक्तिस्वरूपाणि प्रतिक्षिपन्तः स्वमतमेव समीचीनतया व्यवस्थापयन्ति। तथाहि चार्व्वाकाणां मरणस्य देहोच्छेदस्य वा मुक्तित्वेऽपि तन्मते जन्मान्तरास्वीकारेण देहं विना दुःखोत्पत्तेरसम्भवात् प्रतिशरीरावच्छिन्नचरमदुःखध्वंस एवात्यन्तदुःखनिवृत्तित्वेनाभिप्रेयते, स च मरणदुःखोत्तरमुत्पद्यमानोऽन्ततः कालवृत्तिरप्यङ्गीकार्य्यः, आश्रयनाशप्रयुक्तगुणनाशादेः स्वप्रतियोगिसमवायिदेशवृत्तित्वाभ्युपगमासम्भवेन ध्वंसस्य कालवृत्तितायामविसंवादात्। माध्यमिकयोगाचारादिमतेऽपि मुक्तेः स्वरूपतो भेदस्य सत्त्वे असत्त्वे वा तदानीमत्यन्तदुःखनिवृत्तिरावश्यकी एव, वैशेषिकादीनां तत्र तु न विप्रतिपत्तिसम्भावनापि। तदेवमावश्यकदुःखात्यन्तनिवृत्तिपक्षमधिक्षिप्य को वा प्रेक्षावान् अन्यादृशीं मुक्तिं स्वीकुर्य्यात्। दुःखात्यन्तनिवृत्तिं फलत्वेन स्वीकृत्य तदुपायतया विशुद्धविज्ञानादेः कथञ्चनाङ्गीकारश्चेदीमिति ब्रूमः। परन्तु मरणादीनां मुक्तित्वपक्षे तदपि न सङ्गच्छते। अपि च देहोच्छेदस्य मोक्षतापक्षस्तु तस्य पुरुषार्थत्वाभावादेव नोपपद्यते, तथाच चत्वारः पुरुषार्थाः धर्म्मश्च अर्थश्च कामश्च मोक्षश्चेति। चार्व्वाकाणां पुरुषार्थतया प्रतिपादितयोरर्थकामयोः शास्त्रेष्वपि तथैव निरूपणस्य दृष्टचरत्वात्। न हि नरसिंहन्यायेन शास्त्रमेकतः प्रमाणमन्यतश्चाप्रमाणमिति युक्तं व्यपदेष्टुम्। एवमुपपन्ने मुक्तित्वस्य पुरुषार्थताव्याप्यत्वे पुरुषार्थताविरहिणि देहोच्छेदादौ मुक्तित्ववचनमविवेकविजृम्भितमेव सम्पद्येत। न हि कोऽपि सचेतनः सकलप्रियशिरोहीरभूतस्य स्वात्मनः समुच्छेदाय प्रयतते। किञ्च अर्थकामयोरेव

पुरुषार्थत्वमङ्गीकुर्वतः स्वयमेव मोक्षे पुरुषार्थत्वमपलपतः सुतरामेव नोपपन्नं तत्। (१) अपि च देहोच्छेदस्य मोक्षतापक्षे अन्ततो मुक्तेः कालवृत्तित्वसम्भवेऽपि 'चैत्रो मुक्त' इत्यादिना मुक्तेः शरीरवृत्तिचैत्रत्वादिजातिसामानाधिकरण्यमसङ्गतं स्यात्। मणिकारैरपि समासेन तन्मतप्रतिक्षेपे स एव पन्था अनुगृहीतः।

विशुद्धविज्ञानसन्तानोदयमयी मुक्तिरिति मतेऽपि प्राक्तनाविशुद्धसन्तानापेक्षया मुक्तिकालीनविशुद्धविज्ञानसन्तानस्य पृथक्त्वेन य एवादौ बद्धः स एव मुक्त इत्यादिव्यवहारो नोपपद्यते। बन्धमन्तरेणापि मुक्तत्वव्यपदेशे तु परमेश्वरस्यापि नित्यविशुद्धविज्ञानवतो मुक्तिव्यवहारप्रसङ्गः। अतो बन्धमोक्षयोः सामानाधिकरण्यरक्षार्थमन्यादृशमेव मुक्तिस्वरूपं निर्व्वाच्यम्। तदेवं बौद्धप्रस्थानसमाश्रिता मुक्तिरपि न विचारसहतां धत्ते। अपि च मोक्षस्य मुख्यप्रयोजनतायाः प्रायेण सर्व्वतन्त्रसिद्धान्ततया सुखदुःखाभावेतरत्वेन तत्र मुख्यप्रयोजनताया अभावस्य सिद्धेरपि नोपगन्तुं शक्यते मोक्षता। ईश्वरानुमाने मणिकारैरपि समाहितं तथैव (२)। माधवाचार्य्याः सर्व्वदर्शनसंग्रहेऽपि तमेवार्थमन्ववदन् (३)।

---

(१) नापि दुःखहेतुत्वेनात्मनो हानमेव मुक्तिः। सुखदुःखाभावेतरत्वेनापुरुषार्थत्वात् ज्ञानरूपात्महानस्यायत्नसिद्धेः अतिरिक्तहानस्याशक्यत्वाद्दिति। (ईश्वरानुमानम्)

(२) नाप्यनुपप्लवा चित्तसन्ततिरपवर्गः, आवश्यकत्वेन अनुपप्लवस्य दुःखाभावस्य पुरुषार्थत्वेन चित्तसन्ततेरपुरुषार्थत्वात् शरीरादिकारणं विना चित्तसन्ततेरनुत्पादाच्च। यदि चित्तमात्रं तत्सामग्री शरीरादिवैयर्थ्यापत्तेः। (ईश्वरानुमानम्)

(३) धर्म्मिनिवृत्तौ निर्मलज्ञानोदयो महोदय इति विज्ञानवादिवादे सामग्र्यभावः सामानाधिकरण्यानुपपत्तिश्च। भावनाचतुष्टयं हि तस्य कारणमभीष्टं तच्च क्षणभङ्गपक्षे स्थिरैकाधारासम्भवात् लङ्घनाभ्यासादिवदनासादितप्रकर्षं न स्फुटमभिज्ञानमभि-

तदत्रापि मते निर्दोषतासम्पादनाय दुःखात्यन्तनिवृत्तिरेव मुक्तिरभ्युपेया, नत्वन्यादृशी काचित्।

आर्हतानां आवरणमुक्त्यपरपर्य्यायभूतायाः निरावरणताया मुक्तित्व-मतेऽपि प्रष्टव्यं, किमिदमावरणं नाम? यदि सुकृतदुष्कृतरूपमेवावरण-मुच्यते, तदा कर्म्मविप्रमोक्ष एव मोक्ष इति मतमायाति, तच्चोपरक्षितं तत्त्वार्थसूत्रादौ। तदेवं तन्मतस्यैव उपग्रहे तत्रापि आवश्यकतया दुःखनिवृत्तिं मुक्तिमनभ्युपेत्य दुरितनाशादिलक्षणत्वस्यैव सर्व्वकर्म्मविप्र-मोक्षलक्षणत्वस्य मुक्तौ स्वीकारे कः दृशो निर्दोषः पन्थाः। कर्म्मविप्र-मोक्षादेः प्रागुक्तरीत्या पुरुषार्थत्वविरहेण मुक्तित्वमुपदेष्टुमशक्यमेवेति।

आत्मनः सततोर्द्धगतिरेव मुक्तिरित्यपि दुरुपपादम्, गतिक्रियाया मूर्त्तत्वव्याप्यतया अमूर्त्ते आत्मनि गत्यसम्भवात्, न च तन्मते आत्मनो देह-समानपरिमाणत्वेन मूर्त्तत्वमेव नामूर्त्तत्वं कुत्रापि देहे अमूर्त्तत्वाभावादिति वाच्यं, आत्मनो मूर्त्तत्वे आत्मवृत्तिधर्म्माणां प्रत्यक्षानुरोधेन महत्त्वस्याव-श्यकतया परमाणुपरिमाणत्वस्य अङ्गीकर्त्तुमशक्यत्वेन मध्यमपरिमाणत्व-मेवाभ्युपेयम्, तथा च सति मध्यमपरिमाणस्य विनाशप्रतियोगिता-व्याप्यतया मध्यमपरिमाणशालिन आत्मनो नाशस्यापलपितुमशक्यत्वेन कृतनाशाकृताभ्यागमप्रसङ्गदोषाणां कथञ्चिदपि परिहर्त्तुमयोग्यत्वात्। किञ्च 'पतनान्ताः समुच्छ्रया' इति नियमेन चन्द्रसूर्य्यादीनां गत्यनन्तरं प्रत्यावृत्तेरिव आत्मनोऽपि ऊर्द्धगत्यनन्तरं प्रत्यावृत्तेः सम्भवेन मुक्त्यनन्तरं पुनः संसारदशाया आपत्तेः। यदि च वह्नेरिव ऊर्द्ध्वज्वलनं आत्मन ऊर्द्धगतिरेव स्वभावः, स च कर्म्मभिः प्रतिरुद्धः, तदपगमे पुनरधोगति-

---

क्रमयितुं प्रभवति। सोपप्लवस्य ज्ञानसन्तानस्य बद्धत्वे निरुपप्लवस्य च मुक्तत्वे यो बद्धः स एव मुक्त इति सामानाधिकरण्यं न सङ्गच्छते। इति (सर्व्वदर्शनसंग्रहे)।

सम्भवेति तत्सम्प्रदायोऽपीच्छति, तदपि न प्रमाणसिद्धमस्तीत्याद्यनुसन्धेयम। तदेकं निरस्तो जैनपक्षः।

काणादमतसिद्धाया अत्यन्तदुःखनिवृत्तिमात्रस्वरूपाया मुक्तेरपि मोहावस्थासाम्येन ज्ञानसुखादिशून्यत्वेन मूर्च्छाद्यवस्थायामिव तत्र न कस्यापि प्रवृत्तिर्युक्तिमती (१)। अत एवोक्तमभियुक्तैः—'नहि मूर्च्छाद्यवस्थार्थं प्रवृत्तो दृश्यते सुधीः।" इति। दुःखपरिहारार्थाया अपि प्रेक्षावत्प्रवृत्तेः विवलितरक्तनिष्काशनप्रवृत्तिवत् प्रेक्षावत्प्रवृत्तित्वेन हेतुना सुखार्थताया अनुमानेन न कापि दुःखात्यन्तपरिहारमात्रफलिका प्रवृत्तिः सुसिद्धा भवतीति केवलदुःखात्यन्तनिवृत्तेः पुरुषार्थताविरहेणैव मुक्तित्वमनुपपन्नमिति। अत एवोक्तं भगवता भासर्वज्ञेन न्यायसारे—'सुखमात्यन्तिकं यत्र बुद्धिग्राह्यमतीन्द्रियम्। तं वै मोक्षं विजानीयाद् दुष्प्रापमकृतात्मभिः।" तथा 'तत्र सिद्धमेतत् नित्यसंवेद्यमानसुखेन विशिष्टा आत्यन्तिकी दुःखनिवृत्तिः पुरुषस्य मोक्ष इति।" इति च। न च तत्र सुखादिशब्दानां उपचारेण दुःखाभावपरताया उपगमे नागमप्रामाण्येन मुक्तिदशायां सुखभोगसिद्धिरिति वाच्यं मुख्यार्थे बाधकाभावेन उपचारकल्पनाया अन्याय्यत्वात् (२)। न च मुक्तिदशायामदृष्टराहित्येन सुखस्य तत्संवेदनस्य वा सुतरामसम्भवात् नेदं युक्तिसहमिति

---

(१) 'मोहावस्थात्वात् मूर्च्छाद्यवस्थावदत्र विवेकिनां प्रवृत्तिर्न युक्तेत्याहुरन्ये।' (न्यायसारे आगमपरिच्छेदे)।

(२) तथा—'मुख्येऽर्थे बाधकाभावान्नोपचारकल्पना। सुखसंवेदनयोर्नित्यत्वात् मुक्तसंसारावस्थयोरविशेषप्रसङ्ग इति चेन्न चक्षुर्घटयोः कुड्यादेरिव सुखतत्संवेदनयोः विषयविषयिभावसम्बन्धप्रत्यनीकस्याधर्मदुःखादेः संसारावस्थायां सद्भावात्। तन्नाशे च मुक्तावस्थायां भवति सुखसंवेदनयोः सम्बन्धः, कुड्यादिनाशे चक्षुर्घटसम्बन्धवदित्यतो नाविशेषः। सम्बन्धस्य कृतकत्वेन कदाचिद्विनाशप्रसङ्ग इति चेन्न प्रध्वंसानैकान्ति-

वाच्यं सुखसंवेदनयोस्तयोर्नित्यत्वाभ्युपगमात्, न चैवं मुक्तसंसारिणोः साम्यप्रसङ्गः। सतोरपि चक्षुर्घटयोः कुड्यादिव्यवधानेन सन्निकर्षाभावात् प्रत्यक्षाप्रसङ्गवत् सतोरपि संसारदशायां नित्यसुखसंवेदनयोः विषयविषयिभावसम्बन्धविरोधिनामधर्म्मदुःखादीनां सद्भावेन सम्बन्धाभावेनैव तदानीं मुक्तादैलक्षण्यवर्जनात्। अथैवं सम्बन्धस्य जन्यतया कदाचिद्विनाशेन मुक्तिरपि निरस्ता स्यादिति चेन्न जन्यत्वस्य प्रध्वंसाभावे अनैकान्तिकतया जन्यत्वेन हेतुना विनाशप्रतियोगित्वसाधनस्यासम्भवात्। कथञ्चित् जन्यभावत्वस्य अनैकान्तिकत्वशून्यत्वेऽपि अप्रयोजकत्वात् न तथा। तदेवं सिद्धं नित्यसुखसंवेदनसहिताया अत्यन्तदुःखनिवृत्तेर्मुक्तित्वं नैयायिकैकदेशिनां प्रस्थाने (३)।

अपरे नैयायिकास्तु बाधनालक्षणं दुःखम्' इति प्रक्रम्य 'तदत्यन्तविमोक्षोऽपवर्गः' इति न्यायसूत्रपरीक्षणात् दुःखात्यन्तनिवृत्तिमात्रं मोक्षं व्यवस्थापयन्ति। न तु तत्र नित्यसुखानुभूतिमपि स्वीकुर्व्वते, भगवता वात्स्यायनमुनिनापि मोक्षदशायां नित्यसुखानुभूतिर्जीवस्य प्रतिक्षिप्ता दृश्यते (१)। न च 'सुखमात्यन्तिकं यत्र बुद्धिग्राह्यमतीन्द्रियम्। तं वै मोक्षं विजानीयाद् दुष्प्रापमकृतात्मभिः।" इत्यागम-

---

कत्वात् ... ... ... तस्मात् कृतकत्वेऽपि नित्यसुखसंवेदनसंबन्धस्य विनाशकारणाभावात् नित्यत्वं स्थितम्। (न्यायसारे आगमपरिच्छेदः)।

(३) उक्तं हि—'प्रत्यक्षानुमानागमप्रमाणवादिनो नैयायिकैकदेशिनः अक्षपादवदेव प्रमाणादिस्वरूपस्थितिः। मोक्षस्तु न दुःखनिवृत्तिमात्रम् अपितु नित्यसुखस्याविर्भावोऽपि। तस्य जन्यत्वेऽपि निखिलदुःखप्रध्वंसरूपत्वादविनाशित्वञ्च उपपद्यते। इति। (सर्व्वमतसंग्रहे)। तथा—'नित्यानन्दानुभूतिः स्यान्मोक्षे तु विषयादृते वरं वृन्दावने रम्ये शृगालत्वं व्रजाम्यहम्। वैशेषिकोक्तमोक्षात्तु सुखलेशविवर्ज्जितात्। इति (सर्व्वसिद्धान्तसंग्रहे)।

प्रमाणमेव तदानीमनिर्व्वाच्यसुखानुभूतिं प्रमाणयतीति वाच्यं 'अशरीरं वावसन्तं प्रियाप्रिये न स्पृशतः' इत्यादि—विरुद्धार्थकश्रुतिसद्भावेन तत्रत्य-सुखपदस्य दुःखाभावपरताकल्पनस्य न्याय्यत्वात्; नहि वाधकसद्भावे क्वचिदप्युपचारकल्पना दोषमावहति। मुक्तिदशायां नित्यसुखाभिव्यक्ति-पक्षदूषणानां स्वयमेव गदाधरेण मुक्तिवादे विवरणादिह प्रपञ्चाते, ततोऽपि सुविस्तरतरं बुभुत्सूनां 'तदत्यन्तविमोक्षोऽपवर्गः' इति सूत्रस्य वात्स्यायनभाष्यादिकम् आलोचनीयम्। नित्यं सुखञ्च सुतरा-मप्रामाणिकमेवेति मणिकाराः स्पष्टमेव (२) सङ्गिरन्ते। सर्व्वदर्शन-सिद्धान्तपरमाचार्य्येण श्रीहर्षेणापि नैषधीयचरिते सप्तदशसर्गे चार्व्वाक-मुखेन न्यायमतसिद्धमुक्तेः शिलात्वसाम्यमुपन्यस्यता (३) तदेव मतमनु-मतं प्रतिभाति। न च मुक्तेः पाषाणावस्थातुल्यत्वे अपुरुषार्थत्वापत्ति-रिति वाच्यं तस्या दुःखाभावत्वेनैव पुरुषार्थत्वात् दुःखं मे मा भूदिति कामनाया निरुपधित्वेन दुःखाभावतया अत्यन्तदुःखनिवृत्तेरपि विषयत्वात् निरुपधीच्छाविषयत्वापरपर्य्यायमुख्यप्रयोजनत्वस्य तत्र सुस्थितत्वात्। न चैवं मोक्षावस्थापि पुरुषार्थः स्यादिति वाच्यं मोक्षा-नन्तरं मोक्षकालीनेन्द्रियादिनिरोधजनितकष्टादीनामवश्यमनुभाव्यता-निश्चयेन विशेषदर्शिनां तत्र द्वेषस्यैवावश्यकत्वात् तादृशनिश्चयविरहवतां अविशेषदर्शिनां मोक्षावस्थायां नाभिलाष इति को वा शपथं विधातु-

---

(१) नित्यं सुखमात्मनो महत्त्ववन्मोक्षे व्यज्यते, तेनाभिव्यक्तेनात्यन्तं विमुक्तः सुखी भवतीति केचिन्मन्यन्ते, तेषां प्रमाणाभावादनुपपत्तिः।" इत्यादि। ( न्यायसूत्रे वात्स्यायनभाष्यम् )।

(२) 'न च नित्ये सुखे मानमस्ति' ( ईश्वरानुमाने )

(३) मुक्तये यः शिलात्वाय शास्त्रमूचे महामुनिः।
गोतमं तमवेत्यैव यथा वित्थ तथैव सः॥ ( नैषध—१७ सर्ग )

मह: स्यात्? अन्ये तु सुषुप्त्यनन्तरं प्रतिबुद्धस्य 'सुखमहमस्वाप्समिति सुखप्रतिसन्धानसम्पत्तये सुखानुभवस्येव मूर्च्छाद्यनन्तरमपि लब्धसंज्ञस्य 'दुःखमहमास'मित्यनुसन्धाननिर्व्वाहाय तदानीमपि दुःखानुभवः स्वीकार्य्य एवेति; एवञ्च मूर्च्छाद्यवस्था न सुखदुःखादिविरहवत्त्वेन परिच्छेद्या, परं दुःखशबलतया एव; अत्यन्तदुःखनिवृत्तिस्तु न दुःखलेशेनापि शबलेति सुतरामियमुपादेयेति वदन्ति। तदयुक्तं सुषुप्तौ ज्ञानसामान्यकारणीभूतत्वङ्मनोयोगस्यासत्त्वेन तदा ज्ञानाभावपक्षस्य (४) नैयायिकैः स्वीकारात् सुखानुभवस्य असम्भवात्। तत्रत्यप्रतिसन्धानोपपत्तिस्तु कथञ्चिदनुमानादिसाहाय्यकेनापि शक्या निर्वोढुम्। प्रकृतेऽपि मूर्च्छानन्तरकालीनदुःखराशिविज्ञानतः कथञ्चन दुःखसहचरितमवस्थानं मूर्च्छावस्थायामनुमेयम्। विस्तरस्तु स्वयमूहनीयो निपुणदृष्टिभिः।

आनन्दानुभूतिरहितस्य दुःखात्यन्तविमोक्षस्य मुक्तित्वमिति न्यायसूत्रभाष्यादिपर्य्यालोचनेनैव व्यवतिष्ठते, सूत्रकाराणान्तु तत्रैव स्वरस इति न कथमपि समुन्नेतुं शक्यते, आनन्दानुभूतेः तदानीं सत्त्वे वा असत्त्वे वा उभयथैव दुःखात्यन्तनिवृत्तिपक्षाविक्षोभात् परं भाष्यादिनिर्म्मातार एव नानाविधयुक्तिसमवलम्बनेन मोक्षदशायां तादृशानुभूतिमसम्भवां मन्वानास्तथा तथा प्रतिपादितवन्तः। परन्तु दृश्यते माधवाचार्य्यस्य 'संक्षेपशङ्करजय' ग्रन्थस्यान्तिमे भागे यथा भगवान् शङ्कराचार्य्यः केनापि नैयायिकेन सगर्व्वं पृष्टः कणादमुक्तेः कीदृशो विशेषो गौतममुक्ताविति, स चापि 'कणादमते आत्मविशेषगुणात्यन्तसमुच्छेदेन आत्मनः पाषाणवदवस्थानं मुक्तिः, गौतममते च तदानीं

(४) सुषुप्तिकाले त्वचं त्यक्त्वा पुरीतति वर्त्तमानेन मनसा ज्ञानाजननमिति।

( भाषा—सिद्धान्तमुक्तावली )

अस्ति आनन्दसंविदपि' इत्येव॰ विशेषमुद्राजहारेति लभ्यते। तेन च तदानीं गौतमसूत्रस्य आनन्दानुभूतावपि मोक्षदशायां स्वरस इति विज्ञातुं शक्यते, अन्यथा अप्रसिद्धमतनिराकरणाय भाष्यकारादीनां तथा प्रयत्नो नैव समङ्गच्छेत। प्रतिपादितमिदमित्थमेव तत्रभवद्भिः श्रीमत्फणिभूषणतर्कवागीशपादैः न्यायदर्शनभाष्यटिप्पन्याम्।

ननु 'बाधनालक्षणं दुःख'मिति सूत्रे भाष्यकारेण वात्स्यायनेन 'बाधना पीड़ा ताप इति यावत्। तया अनुविद्धं अनुषक्तं अविनिर्भागेण वर्त्तमानं दुःखयोगाद् दुःखमिति।' भाष्यपङ्क्तिमुक्तवता अनन्तरञ्च 'तदत्यन्तविमोक्षो ऽपवर्गः' इति सूत्रेऽपि 'तेन दुःखेन जन्मना अत्यन्तं विमुक्तिरपवर्ग' इति व्यवस्थापयता अन्यादृशमेव मोक्षस्वरूपमुपवर्णित-मिति चेन्न सर्व्वस्यास्य सुखादिलक्षणस्य जगतो दुःखानुविद्धतया हेयत-बुद्धिसम्पादनस्यैव तत्प्रतिपादनफलत्वं, वस्तुतो मोक्षस्वरूपन्तु दुःखा-त्यन्तनिवृत्तिरेव, अत एव भाष्ये 'सोऽयं सर्व्वं दुःखेनानुविद्धमिति पश्यन् दुःखं जिहासुर्जन्मनि दुःखदर्शी निर्व्विद्यते निर्व्विण्णो विरज्यते विरक्तो विमुच्यत' इति। अत्र विश्वनाथस्तु दुःखसूत्रवृत्तौ 'बाधना पीड़ा तदेव लक्षणं स्वरूपं' यस्य तत्, तथा च अनुभवसिद्धदुःखत्वजातिरेव लक्षणम्। शरीरेन्द्रियार्थेषु दुःखसाधनत्वात् सुखे च दुःखानुषङ्गात् दुःखव्यवहारो गौण इति, अत एव अग्रिमसूत्रे तत्पदेन मुख्यदुःख-परामर्शः।' इति। अनन्तरसूत्रवृत्तौ च—'तस्य दुःखस्य अत्यन्तविमोक्षः स्वसमानाधिकरणदुःखासमानकालीनदुःखध्वंसः' तस्य च जन्मापायादेव सम्भव इत्याशयेन 'दुःखेन जन्मना अत्यन्तं विमुक्तिः अपवर्गः' इति भाष्यम्। दुःखेन दुःखानुषङ्गिणेत्यर्थः।" इति व्याचक्षाणः दुःखा-त्यन्तनिवृत्तेरेव स्पष्टं मोक्षस्वरूपतां प्रत्यपीपदत्, भाष्यस्यापि तत्रैव तात्पर्य्यमित्यपि तत एव स्पष्टमायाति। तत् दुःखात्यन्तविप्रमोक्षो ऽपवर्ग इति निरपवादो नैयायिकराद्धान्तः।

अथेदानीं पूर्व्वमीमांसकमतमालोच्यते,—तच्च मूलत एकमपि शिष्यबुद्धिभेदेन विभिन्नां सरणिमवलम्बमानं नानाप्रकारतां धत्ते।—तत्र प्रभाकराणां अभावस्य केवलाधिकरणस्वरूपत्वादिकं मतान्तरादतिरिच्यते, भट्टमते तु अभावस्यातिरिक्तपदार्थत्वमङ्गीक्रियते (१)। एवमपरेऽपि विशेषा अनुसन्धेयाः।

मीमांसकमते वेदस्य स्वतःप्रामाण्यं मन्त्रार्थवादादीनाञ्च विधिशेषत्वेन प्रामाण्यं कथञ्चित्। स्वर्गादिलोकाः नित्याः, इन्द्रादिदेवता चतुर्थ्यन्तपदमात्रात्मिका, नास्ति तन्मते ईश्वरः कश्चित् सर्व्वज्ञः, धर्म्मः अग्निहोत्रदर्शपौर्णमासादिलक्षणः, अधर्म्मश्च, ब्रह्महत्यादिनिषिद्धक्रियालक्षणः (२)। प्रभाकराणां वेदविहितं कर्म्मैव मोक्षदं कर्म्म, नापरं,

---

(१) अर्थापत्त्या सह प्रत्यक्षादिचतुष्टयप्रामाण्यवादिनः प्रभाकरस्य अभावेन सह प्रत्यक्षादिपञ्चकप्रामाण्यवादिनो भट्टकुमारस्य च जैमिनीयभाष्यव्याख्यातृत्वे तुल्येऽपि प्रमातृप्रमेययोः प्रमाणवद्विसंवादः, कथं, यस्याभावो न प्रमाणं तस्य गुरोर्नाभावो नाम कश्चिद् विषयः, किन्तर्हि भूतले घटो नास्तीति केवलभूतलमात्रं प्रकाशते। तमश्च रूपदर्शनाभावमात्रं, न द्रव्यान्तरम्। यस्य पुनरभावः प्रमाणं तस्य कुमारस्य अभावलक्षणोऽपि विषयोऽस्ति।" (सर्व्वमतसंग्रहे प्रभाकरादिमीमांसकमतनिरूपणम्)। अन्यत्र च—'न विशेषो न चाभावो भूतलाद्यतिरेकतः।" इति (सर्व्वसिद्धान्तसंग्रहे—प्रभाकरपक्षे)।

(२) वेदस्य नित्यत्वे स्वतः प्रामाण्ये च सत्यपि मन्त्रार्थवादभागस्य उपनिषद्भागस्य इतिहासपुराणानाञ्चाप्रामाण्यम्, विधिशेषत्वेन वा कथञ्चित् प्रामाण्यं। स्वर्भूपाताललोकानां नित्यत्वं, निरीश्वरत्वं, चेतनाचेतनात्मकस्य विश्वस्य अनेकत्वं सत्त्वं, इन्द्राग्न्यादिदेवतानां विग्रहपञ्चकाभावेन चतुर्थ्यन्तपदमात्रत्वं, धर्म्मस्याग्निहोत्रदर्शपूर्णमासपशुबन्धसोमयागाद्यात्मत्वं, मोक्षस्य आत्मनः स्वरूपावस्थानात्मकत्वं च गुरुकुमारयोरविशिष्टम्। (सर्व्वमतसंग्रहे प्रभाकरादिमतनिरूपणे)।

पुनः शरीरसमुत्पादश्च कर्म्मक्षयादेव नोपजायत इति प्रतियन्ति (१)। तन्न अनुत्पादप्रतियोगिनां प्रागभावस्य अलीकत्वात्। निपुणास्तु मोक्षं निरानन्दमेव मन्यन्ते, तदानीं मुक्तस्य मनःसम्बन्धस्याप्यभावेन सुतरामानन्दानुभवादीनामसम्भवेन नित्यानन्दानुभवादिस्वीकारस्य उन्मत्तप्रलपितत्वापत्तेः। तदस्मिन् मते सुषुप्तिदशायामिव ज्ञानादीना-मेकान्ततो विरहेण सुषुप्तिदशातुल्या मुक्तिरिति शक्यमेव व्यपदेष्टुम्।

शास्त्रदीपिकाकाराः क्वचित् सुखदुःखयोरनुपभोगमेव मोक्षं प्रतिपादयन्ति। अशरीरस्य सुखदुःखोपभोगासम्भवात् (२)। सुख-दुःखादिशून्यत्वेन तदानीमात्मनः स्वरूपावस्थानमिति प्रतिपादितप्रायम्। तच्च स्वरूपावस्थानं ज्ञानशक्तिसत्ताद्रव्यत्वादिकं निजरूपमात्रमुपादाय

---

(१) "सुखोपभोगरूपश्च यदि मोक्षः प्रकल्प्यते। स्वर्ग एव भवेदेष पर्य्यायेण क्षयी च सः। नहि कारणवत् किञ्चिदक्षयित्वेन गम्यते। तस्मात् कर्म्मक्षयादेव हेत्वभावेन मुच्यते।" (श्लोकवार्त्तिके—१०५ श्लोकः)। "तत्र ज्ञातात्मतत्त्वानां भोगात् पूर्व्वक्रियाक्षये। उत्तरप्रचयासत्त्वाद्देहो नोत्पद्यते पुनः।" "कर्म्मजन्योप-भोगार्थं शरीरं न प्रवर्त्तते। तदभावे न कश्चिद्धि हेतुस्तत्रावतिष्ठते। मोक्षार्थी न प्रवर्त्तेत तत्र काम्यनिषिद्धयोः। नित्यनैमित्तिके कुर्य्यात् प्रत्यवायजिहासया।" (श्लोकवार्त्तिके—१०८—११० श्लोकः)। अन्यच्च "शरीरसम्बन्धो बन्धः, तदभावो मोक्षः, तेन निष्पन्नानां देहानां यः प्रध्वंसाभावः, यश्चानुत्पन्नानां प्रागभावः, स मोक्षः। कर्म्मनिमित्तश्च बन्धः कर्म्मक्षयादेव न भवतीति।" (श्लोकवार्त्तिकन्यायरत्नाकर-व्याख्या १०६ श्लोके)।

(२) "सुखदुःखोपभोगो हि संसार इति शब्द्यते। तयोरनुपभोगन्तु मोक्षं मोक्षविदो विदुः। श्रुतिरप्येतमेवाह भेदं संसारमोक्षयोः।" न ह वै सशरीरस्य प्रियाप्रियविहीनता। अशरीरं वावसन्तं स्पृशतो न प्रियाप्रिये।" (शास्त्र—१।१।५)

स्वसमानाधिकरणानुभवप्रागभावासहवृत्तित्वमेव। तेन अन्ततो मोक्ष-जनकतत्त्वसाक्षात्काररूपानुभवप्रागभावस्यापि संसारदशायां वर्त्तमान-त्वेन नातिप्रसङ्ग इति। तदिदं न विचारसहं, सुखदुःखाभावेतरत्वेन तादृशध्वंसस्य स्वतःपुरुषार्थत्वविरहात्। अत्यन्तदुःखनिवृत्तिपक्षापे-क्षया संस्कारजनकत्वादिगुरुतरपदार्थघटितत्वेन गौरवाच्च। दुःखमय-संसारबीजमिथ्याज्ञानध्वंसो मुक्तिरिति वदन्तोऽपि तथैव निराकार्य्याः। अपरे च संस्काराजनकभोगविषयदुःखध्वंस इति मुक्तिस्वरूपमुदीरयन्तः स्पष्टमेव गौरवादिदोषकचीकारेण प्रतिक्षेपणीयाः। निरुक्तमताना-मीश्वरानुमानग्रन्थीयमुक्तिप्रकरणेऽपि समुल्लेखो दृश्यते, तदपाकरणञ्च। भाट्टचिन्तामणिग्रन्थे आत्यन्तिकदुःखप्रागभावो मोक्ष इति प्राभाकराणां मतमुपलभ्यते, प्रकृते गदाधरीयमुक्तिवादप्रकरणेऽपि प्राभाकराणां तथैव मतमुपगृहीतं ग्रन्थकारेण, मणिकारैरपि ईश्वरानुमाने समुदाहृतं तथैव, तत् किमित्यधस्तादुपनिबद्धं प्रभाकरमते आत्मनः स्वरूपावस्थानस्य मोक्षत्वं सुसङ्गच्छत इति चेत्, अत्राहुः—आत्मनः पाषाणवत् स्वरूपेणावस्थिति-रपवर्ग इति यदुक्तं, तत् फलाभिसन्धानेन, मोक्षस्वरूपन्तु दुःखात्यन्तप्राग-भाव एव, तथा सत्येव मुक्तेः पुरुषार्थतायाः सम्भवात्, एवञ्च तादृश-दुःखप्रागभावदशायामात्मनः स्वरूपावस्थितेरावश्यकत्वेन आत्मनः स्वरूपावस्थितिर्मुक्तिरभिहिता। यच्च सर्व्वसिद्धान्तसंग्रहादौ भट्टमत-विवरणे नित्यानन्दानुभूतेर्मुक्तित्वमुक्तं तदपि प्रथमकक्षायामिति प्रति-पत्तव्यम्, भाट्टचिन्तामण्यादौ सर्व्वत्रैव नित्यसुखाभिव्यक्तिपक्षस्य प्रतिक्षेपेण प्रकारान्तरस्य व्यवस्थापनात्। तदत्रापि दुःखात्यन्तनिवृत्तिरेव मुक्ति-रभिप्रेता। तदुक्तं भाट्टचिन्तामणौ—'अत उक्तरीत्यैव विरोधपरिहार इत्यात्यन्तिकदुःखाभाव एव मोक्ष' इति। परे तु यागादिजन्यं स्वर्गमेव परमपुरुषार्थं मीमांसकमते प्रतिपादयन्ति, अत एव अद्वैतामोदे 'यज्ञादि-कर्म्म कृत्वा स्वर्गादिफलसम्पादनमेव मुख्यः पुरुषार्थ इत्येवं लोकानां

प्रत्ययो दृढ़ः सञ्जज्ञे, एतं लोकप्रत्ययं निराकुर्व्वन् मोक्षमार्गे च लोकानां प्रवृत्तिं जनयन् भगवान् वादरायणो ब्रह्मसूत्राणि प्रणिनाय' इति। सर्व्वदर्शनसंग्रहेऽपि मतान्तरवत् मीमांसामते स्वर्गातिरिक्तं परमप्रयोजनं नोपलभ्यते। अत एव न्यायवार्त्तिके "त्रय्यां तावत् किं तत्त्वज्ञानं, कश्च निःश्रेयसाधिगम इति, तत्त्वज्ञानं तावत् अग्निहोत्रादिसाधनानां स्वागतादिपरिज्ञानं अनुपहतादिपरिज्ञानञ्च निःश्रेयसाधिगमोऽपि स्वर्गप्राप्तिः, तथाह्यत्र स्वर्गप्राप्तिः फलं श्रूयते," इति सन्दर्भोऽपि तदनुकूल एव मीमांसाया वेदार्थविचारप्रधानत्वात् तत्फलातिरिक्तफलत्वस्य अन्याय्यत्वात् इति। तन्न विचारसहं स्वर्गस्य क्षयित्वेन 'न स पुनरावर्त्तते' इत्यादिश्रुतिविरोधात् तथा स्वीकर्त्तुमशक्यत्वात्।

अथेदानीं सांख्यसिद्धान्तः समीक्ष्यते, सांख्यदर्शनस्य सम्यक्ख्यातिप्रधानत्वात् सांख्यमिति संज्ञा। तस्य च समीक्ष्योक्तमित्याद्यपि नामधेयमुपलभ्यते। तच्च द्विविधं सेश्वरं निरीश्वरञ्च। सेश्वरं मुनिना पतञ्जलिना अनन्तावतारेण निबद्धं परमेश्वरषड्विंशं प्रकृत्यादिपञ्चविंशतितत्त्वमयं, निरीश्वरञ्च केवलमीश्वरमपहाय प्रकृत्यादिपञ्चविंशतितत्त्वमालावेदकं (१)। तत्र आत्मपदवाच्याः पुरुषा बहवस्ते च निर्गुणा निष्क्रियाश्च, सर्व्व एव गुणाः प्रकृतिगताः क्रियाश्च। प्रकृतेरचेतनत्वेऽपि चैतन्यमयपुरुषसन्निधानेन अयस्कान्तसान्निध्येन लोहस्येव

---

(१) "सांख्यशास्त्रं द्विधाभूतं सेश्वरञ्च निरीश्वरम्। चक्रे निरीश्वरं सांख्यं कापिलोऽन्यत् पतञ्जलिः। कपिलो वासुदेवः स्यादनन्तः स्यात् पतञ्जलिः।" ( सर्व्वसिद्धान्त—सांख्यपक्षे ) पुरुषप्रकृतिमहदहङ्कारमनःश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थशब्दस्पर्शरूपरसगन्धाकाशवायुवह्निसलिलभूमय इति निरीश्वरस्य पञ्चविंशतितत्त्वानि, सेश्वरस्य परः पुरुषोऽतिरिच्यते इति षड्विंशतिः। ( सर्व्वमत—सांख्यमतनिरूपणम् )।

स्वसमानाधिकरणानुभवप्रागभावासहवृत्तित्वमेव। तेन अन्ततो मोक्ष-जनकतत्त्वसाक्षात्काररूपानुभवप्रागभावस्यापि संसारदशायां वर्त्तमान-त्वेन नातिप्रसङ्ग इति। तदिदं न विचारसहं, सुखदुःखाभावेतरत्वेन तादृशध्वंसस्य स्वतःपुरुषार्थत्वविरहात्। अत्यन्तदुःखनिवृत्तिपक्षाद्य-पेक्षया संस्कारजनकत्वादिगुरुतरपदार्थघटितत्वेन गौरवाच्च। दुःखमय-संसारबीजमिथ्याज्ञानध्वंसो मुक्तिरिति वदन्तोऽपि तथैव निराकार्य्याः। अपरे च संस्काराजनकभोगविषयदुःखध्वंस इति मुक्तिस्वरूपमुदीरयन्तः स्पष्टमेव गौरवादिदोषकक्षीकारेण प्रतिक्षेपणीयाः। निरुक्तमताना मीश्वरानुमानग्रन्थीयमुक्तिप्रकरणेऽपि समुल्लेखो दृश्यते, तदपाकरणञ्च। भाट्टचिन्तामणिग्रन्थे आत्यन्तिकदुःखप्रागभावो मोक्ष इति प्राभाकराणां मतमुपलभ्यते, प्रकृते गदाधरीयमुक्तिवादप्रकरणेऽपि प्राभाकराणां तथैव मतमुपगृहीतं ग्रन्थकारेण, मणिकारैरपि ईश्वरानुमाने समुदाहृतं तथैव, तत् किमित्यधस्तादुपनिबद्धं प्रभाकरमते आत्मनः स्वरूपावस्थानस्य मोक्षत्वं सुसङ्गच्छत इति चेत्, अत्राहुः—आत्मनः पाषाणवत् स्वरूपेणावस्थिति-रपवर्ग इति यदुक्तं, तत् फलाभिसन्धानेन, मोक्षस्वरूपन्तु दुःखात्यन्तप्राग-भाव एव, तथा सत्येव मुक्तेः पुरुषार्थतायाः सम्भवात्, एवञ्च तादृश-दुःखप्रागभावदशायामात्मनः स्वरूपावस्थितेरावश्यकत्वेन आत्मनः स्वरूपावस्थितिर्मुक्तिरभिहिता। यच्च सर्व्वसिद्धान्तसंग्रहादौ भट्टमत-विवरणे नित्यानन्दानुभूतेर्मुक्तित्वमुक्तं तदपि प्रथमकक्षायामिति प्रति-पत्तव्यम्, भाट्टचिन्तामण्यादौ सर्व्वत्रैव नित्यसुखाभिव्यक्तिपक्षस्य प्रतिक्षेपेण प्रकारान्तरस्य व्यवस्थापनात्। तदत्रापि दुःखात्यन्तनिवृत्तिरेव मुक्ति-रभिप्रेता। तदुक्तं भाट्टचिन्तामणौ—'अत उक्तरीत्यैव विरोधपरिहार इत्यात्यन्तिकदुःखाभाव एव मोक्ष' इति। परे तु यागादिजन्यं स्वर्गमेव परमपुरुषार्थं मीमांसकमते प्रतिपादयन्ति, अत एव अद्वैतामोदे 'यज्ञादि-कर्म्म कृत्वा स्वर्गादिफलसम्पादनमेव मुख्यः पुरुषार्थ इत्येवं लोकानां

प्रत्ययो दृढ़ः संजज्ञे, एतं लोकप्रत्ययं निराकुर्व्वन् मोक्षमार्गे च लोकानां प्रवृत्तिं जनयन् भगवान् वादरायणो ब्रह्मसूत्राणि प्रणिनाय' इति। सर्व्व-दर्शनसंग्रहेऽपि मतान्तरवत् मीमांसामते स्वर्गातिरिक्तं परमप्रयोजनं नोपलभ्यते। अत एव न्यायवार्त्तिके "तथ्यां तावत् किं तत्त्वज्ञानं, कश्च निःश्रेयसाधिगम इति, तत्त्वज्ञानं तावत् अग्निहोत्रादिसाधनानां स्वागतादिपरिज्ञानं अनुपहतादिपरिज्ञानञ्च निःश्रेयसाधिगमोऽपि स्वर्गप्राप्तिः, तथाह्यत्र स्वर्गप्राप्तिः फलं श्रूयते," इति सन्दर्भोऽपि तदनुकूल एव मीमांसाया वेदार्थविचारप्रधानत्वात् तत्फलातिरिक्तफलत्वस्य अन्याय्यत्वात् इति। तन्न विचारसहं स्वर्गस्य क्षयित्वेन 'न स पुनरावर्त्तते' इत्यादिश्रुतिविरोधात् तथा स्त्रीकर्त्तुमशक्यत्वात्।

अथेदानीं सांख्यसिद्धान्तः समीक्ष्यते, सांख्यदर्शनस्य सम्यक्ख्याति-प्रधानत्वात् सांख्यमिति संज्ञा। तस्य च समीक्ष्योक्तमित्याद्यपि नामधेयमुपलभ्यते। तच्च द्विविधं सेश्वरं निरीश्वरञ्च। सेश्वरं मुनिना पतञ्जलिना अनन्तावतारेण निबद्धं परमेश्वरषड्विंशं प्रकृत्यादि-पञ्चविंशतितत्त्वमयं, निरीश्वरञ्च केवलमीश्वरमपहाय प्रकृत्यादिपञ्च-विंशतितत्त्वमालावेदकं (१)। तत्र आत्मपदवाच्याः पुरुषा बहवस्ते च निर्गुणा निष्क्रियाश्च, सर्व्व एव गुणाः प्रकृतिगताः क्रियाश्च। प्रकृते-रचेतनत्वेऽपि चैतन्यमयपुरुषसन्निधानेन अयस्कान्तसान्निध्येन लोहस्येव

(१) "सांख्यशास्त्रं द्विधाभूतं सेश्वरञ्च निरीश्वरम्। चक्रे निरीश्वरं सांख्यं कपिलोऽन्यत् पतञ्जलिः। कपिलो वासुदेवः स्यादनन्तः स्यात् पतञ्जलिः।" (सर्व्व-सिद्धान्त—सांख्यपक्षे) पुरुषप्रकृतिमहदहङ्कारमनःश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणि-पादपायूपस्थशब्दस्पर्शरूपरसगन्धाकाशवायुवह्निसलिलभूमय इति निरीश्वरस्य पञ्चविंशति-तत्त्वानि, सेश्वरस्य परः पुरुषोऽतिरिच्यते इति षड्विंशतिः। (सर्व्वमत—सांख्य-मतनिरूपणम्)।

क्रिया न विरुद्धा (१)। तत्र निरीश्वरसांख्यमते पङ्ग्वन्धन्यायेन उभयोः संयोगात् प्रकृतिपुरुषयोरविवेकप्रसूतः संसारः, तयोश्च विवेकग्रहेण अनादेरपि अविवेकस्य नाशात् आत्मनः कैवल्यम् (२)। तत्र सेश्वरसांख्ये योगस्य मोक्षप्राप्तौ प्राधान्यमभ्युपेयते, निरीश्वरे तु ज्ञानस्यैव। पञ्चविंशतेः षड्विंशतेर्वा तत्त्वानां प्रकृत्यादीनां स्वरूपविज्ञानादेव प्रकृतिपुरुषान्यताज्ञानस्य सुसम्भवात् मुक्तौ तथाभूततत्त्वज्ञानस्य हेतुत्वमप्युपदिश्यते तन्त्रेषु (३)। सत्स्वपि पदार्थान्तरतत्त्वज्ञानेषु प्रकृतिपुरुषान्यताविज्ञानमन्तरेण नालमुपपादयितुमपुनरावृत्तिम्. केवलं प्रकृति-

---

(१) 'प्रकृतेः क्रियमाणानि गुणैः कर्म्माणि सर्व्वशः। अहङ्कारविमूढात्मा कर्त्ताहमिति मन्यते।' (भगवद्गीता)। उक्तञ्च 'उभयथापि पक्षे पुंसः कूटस्थत्वेन सत्त्वरजस्तमोगुणात्मिकायाः प्रकृतेरेव जगदाकारेण परिणामित्वं सृष्टस्य जगतः सुखदुःखमोहात्मकत्वञ्चानुमतम्।' (सर्व्वमतसंग्रहे सांख्यमतनिरूपणम्) "जन्मादिव्यवस्थातः पुरुषबहुत्वम्।" (सांख्यसूत्रम् १।४९)। "जन्ममरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च। पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्य्ययाच्चैव"। (सांख्यकारिका—१८)। "यथा निर्व्यापारस्याप्ययस्कान्तस्य सन्निधानेन लौहस्य व्यापारः, तथा निर्व्यापारस्य पुरुषस्य सन्निधानेन प्रधानव्यापारो युज्यते। (सर्व्वदर्शनसंग्रहे)।

(२) पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य। पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः।" (सांख्यकारिका—२१)। 'व्यक्ताव्यक्तविवेकेन पुरुषस्यैव वेदनात्। दुःखत्रयनिवृत्तिः स्यादैकान्तात्यन्ततो नृणाम्।" इति (सर्व्वसिद्धान्तसंग्रहे सांख्यपक्षः)। 'ज्ञानेनैवापवर्गः स्यादज्ञानादवध्यते नरः।" (सर्व्वसिद्धान्त—सांख्यपक्षः)।

(३) 'पञ्चविंशतितत्त्वज्ञो यत्र कुत्राश्रमे वसन्। जटी मुण्डी शिखी वापि मुच्यते नात्र संशयः। पञ्चविंशतितत्त्वानि पुरुषः प्रकृतिर्महान्' इत्यादि। (सर्व्वसिद्धान्तसंग्रहः)।

पुरुषान्यताविज्ञानादेव हि सम्पद्यते अपुनर्भवः (१)। सति कैवल्ये प्रवृत्तिस्वभावाया अपि प्रकृतेः चरितार्थतया एव निवृत्तिः (२)।

तत्र सेश्वरनिरीश्वरयोर्द्वयोरेव दुःखात्यन्तनिवृत्तिरेव परमपुरुषार्थो मोक्षः। तदुक्तं सांख्यसूत्रे कपिलेन "त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः।" इति। सेश्वरसांख्यपातञ्जलदर्शनेऽपि 'हेयं दुःखमनागत' मिति सूत्रपर्यालोचनेन दुःखहानस्यैव मोक्षरूपता प्रतिभासते। यच्च क्वचिदन्यादृशं स्वरूपमुपलभ्यते मोक्षस्य सांख्यग्रन्थेषु, तदपि एतत्परतया एव व्याख्येयम् (३)। प्रतिपादितमिदमस्माभिर्मुक्तिदीपिकायां पातञ्जलमतसिद्धमुक्तिविचारादिप्रसङ्गेन संक्षेपात्। तत्र केचित् मुक्तौ योगसहितस्य ज्ञानस्य हेतुतां ब्रुवते, केचित् ज्ञानसहायस्य योगस्य (४) केचिच्च ज्ञानमात्रस्यैव। सर्व्वत्रैव ज्ञानस्य अपेक्षणात् मुक्तिमार्गे ज्ञानमेव प्रधानमिति प्रतिपत्तव्यम्। अत एवोक्तं सर्व्वमतसंग्रहे 'सेश्वरस्य तत्त्वज्ञानसहकृतो योगो मुक्तिहेतुः, इतरस्य योगसहितं तत्त्वज्ञानमिति।' योगेन हि द्विविधानि फलानि समुत्पद्यन्ते विद्यामयानि अविद्यामयानि च

---

(१) 'न चौषधैर्न यागाद्यैः स्वर्गादिफलहेतुभिः। तं गुणविषयैर्मोक्षस्तत्त्वज्ञानादृते परैः।' 'पञ्चविंशतितत्त्वानि व्यक्ताव्यक्तादिकानि यः। वेत्ति तस्यैव विस्पष्टमात्मज्ञानं भविष्यति।' इति ( सर्व्वसिद्धान्तसंग्रहे सांख्यपक्षः )।

(२) "रङ्गस्य दर्शयित्वा निवर्त्तते नर्त्तकी यथा नृत्यात्। पुरुषस्य तथात्मानं प्रकाश्य विनिवर्त्तते प्रकृतिः।" ( सांख्यकारिका—५९ )। 'प्रकृतेः सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति। या दृष्टास्मीति पुनर्न दर्शनमुपैति पुरुषस्य। इति ( सांख्यका—६१ )।

(३) 'प्रकृतिवियोगो मोक्षः पुरुषस्यैवान्तरज्ञानात्' इति ( षड्दर्शन—४३ )।

(४) सेश्वरस्य तत्त्वज्ञानसहितो योगी मुक्तिहेतुः, इतरस्य योगसहितं तत्त्वज्ञानं मुक्तिहेतुरिति। ( सर्व्वमतसंग्रहे सांख्यमतनिरूपणम् )

तत्र विद्यामयानि भक्तिज्ञानवैराग्याणि अविद्यामयानि च अणिमाद्य-ष्टैश्वर्य्याणि (२)। तेषु च अविद्यामयानि परमार्थलाभान्तरायभूतानि तथा ऐश्वर्य्यलाभेन कृतकृत्यता विज्ञानादनन्तरं प्रकृष्टपदलाभौत्सुक्य-प्रतिरोधात्, अत एव विद्यामयानि योगफलान्युपादेयानि नेतराणि (३)। अष्टाङ्गयोगानुष्ठानेन परमेश्वरप्रणिधानेन च प्रकृतिपुरुषविवेकसाक्षात्-कृतावनुपप्लवायां समुत्पन्नायामविद्यादयः क्लेशाः समुच्छिन्नाः कर्म्मा-शयाश्च विलीना भवन्ति. तत एव पुरुषः केवलो निर्लेपः सम्यक् निर्व्वाणमुपैति। पदार्थान्तरचिन्तासम्भवा अन्यादृशविवेकमूलापि सामयिकी मुक्तिरस्ति, सा तु सान्ता, प्रकृतिपुरुषविवेकप्रभवैव निरन्ता। अत एवाहुः—'दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः'। इत्यादि सांख्यसूत्रवृत्त्यादौ, 'आवृत्तिस्तत्रापि उत्तरोत्तरयोनियोगाद्धेय' इति सांख्यसूत्रादौ च। तदेवं योगशास्त्रोक्ताष्टाङ्गयोगानुष्ठानात् ईश्वरप्रणिधान-साचिव्याद्वा तस्मात् अविद्यादितिरोभावे सति प्रकृतिपुरुषविवेक-साक्षात्काराद्वात्यन्तदुःखनिवृत्तिरूपो मोक्षः सम्पद्यत इति मथितोऽर्थः। अत एवोक्तं शङ्करेण सर्व्वसिद्धान्तसंग्रहे 'ज्ञानेन मुक्तिं कपिलो योगेनाह पतञ्जलिः। योगो कपिलपक्षोक्तं तत्त्वज्ञानमपेक्षते।" इति। यद्वि गदाधरेण अन्यथैव सांख्यपातञ्जलमतमुपात्तं स्वग्रन्थे, तदपि सारत एतत्कल्पपरमेवावसेयम्। एकदेशिमतनिराकरणार्थं वा तत्।

---

(२) योगफलानि च द्विविधानि विद्याविद्याभेदात्, तत्र विद्यामयानि भक्तिज्ञान-वैराग्याणि अविद्यामयान्यणिमाद्यष्टैश्वर्य्याणि, एवमन्या अपि बाह्या योगसिद्धयः।"

( सर्व्वमत—सांख्यमतनिरूपणे )

(३) 'ते समाधावुपसर्गा व्युत्थाने सिद्धयः।' ( पातञ्जलदर्शनम् )। शङ्करस्तु—'अणिमाद्यष्टकं तस्य योगसिद्धस्य जायते। तेन मुक्तिविरोधी न शिवस्येव यथा तथा।" इति प्रतिपादितवान् ( सर्व्वसिद्धान्तसंग्रहे पातञ्जलपक्षे )।

अथेदानीं ब्रह्मवादिमतमवतार्य्यते। पूर्वोद्दिष्टा ब्रह्मवादिनो द्विविधाः औपनिषदाः पौराणिकाश्च। औपनिषदा अपि द्विविधाः सगुणब्रह्मवादिनो निर्गुणब्रह्मवादिनश्च। तत्र श्रीरामानुजाचार्य्यभास्कराचार्य्यबोधायनप्रभृतयः सगुणब्रह्मवादिनः, श्रीमच्छङ्करभगवत्पादप्रभृतयो निर्गुणब्रह्मवादिनः। सगुणब्रह्मवादिनां श्रीमद्रामानुजाचार्य्याणां प्रस्थाने मूलतत्त्वं त्रिविधं जड़जीवेश्वरभेदात्, जड़ं सुप्रसिद्धं पञ्चभूतमयं देहादिकमखिलं जगत्, तदेव भोगसाधनम्। तदपेक्षया स्वरूपप्रकृतिभ्यामतिविलक्षणः तदन्तर्यामी जीवः, तस्याप्यन्तर्यामी परमेश्वरः, स हि सर्व्वजड़जीवव्यापी सर्व्वनियामकश्च। नहि जीवेश्वरयोरौपाधिको भेदः, मुक्तिदशायामपि तयोर्भेदस्य शास्त्रसिद्धत्वात्। तदुक्तं 'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति।' ( मुण्डक—३।१।३ )। गीतायामपि "इदं ज्ञानमुपाश्रित्य मम साधर्म्म्यमागताः।" इति। ( गी—१४।२ )। नहि स्वीयं साम्यं स्वस्मिन् सम्भवति साम्यस्य भेदघटितत्वात्। 'मुक्तोपसृप्यव्यपदेशाच्च' इति ब्रह्मसूत्रप्रतिपादितमुक्तोपसृप्यत्वमपि मुक्तिदशायां तयोर्भेदमनुवदति।

अस्मिन् मते माया नाम नानिर्व्वचनीयाज्ञानरूपा, परं ईश्वराद् वस्तुतो भिन्नं त्रिगुणात्मकं प्रधानमेव, तदेव हि सर्व्वजगदात्मना परिणमते। एतन्मते जीवोऽणुपरिमाणो नित्यश्च, प्रतिशरीरं भिन्नः स्वयम्प्रकाशश्च। तस्य न स्वतः कर्त्तृत्वादि, किन्तु परमेश्वराधीनमेव। स चायं जीवात्मा त्रिविधः बद्धमुक्तनित्यभेदात्। आब्रह्मस्तम्बपर्य्यन्ताः सर्व्वे संसारिणो बद्धाः, पुरुषोत्तमोपासनया परित्यक्तसूक्ष्मदेहा वैकुण्ठविहारिणो मुक्ताः. न तेषामवधिरस्ति ब्रह्मानुभूतेः। तदानीं मुक्तिदशायां अप्राकृतशब्दस्पर्शरूपरसगन्धशक्तिज्ञानानन्दरूपा अष्टौ गुणाः संसारदशायामननुभूताः सम्यगनुभूयन्ते। नित्यजीवास्तु गरुड़ानन्तविष्वक्सेनप्रभृतयः। एतन्मते नित्यविभूतिर्नाम शुद्धसत्त्वमयः स्वप्रकाशो देश-

विशेषोऽस्ति, स चायमूर्द्धमपरिच्छिन्नः केवलमध एव प्राप्तपरिच्छेदः, तदेव भोगस्थानं पुरुषोत्तमस्य मुक्तानां नित्यजीवानाञ्च। सविशेष एव परमात्मा, तत्र जगत्कारणत्वस्य तदुपयोगिसर्व्वज्ञत्वादिरूपकल्याण-गुणादीनामवश्यमङ्गीकर्त्तव्यत्वात्। निर्गुणत्वादिश्रुतयस्तु हेयगुण-निषेधपरतया व्याख्येया इति। अत एव अद्वैतामोदे—'नित्यं हेयगुणावधूननपरा नैर्गुण्यवादाः श्रुतौ; स्पष्टार्थाः सगुणोक्तयः शुभगुणप्रख्यापनाद् ब्रह्मणः। अद्वैतश्रुतयो विशिष्टविषया निष्कृष्ट-रूपाश्रया, भेदोक्तिस्तदिहाखिलश्रुतिहितं रामानुजीयं मतम्।" इति। एतन्मते सर्व्वोऽपि प्रपञ्चः सत्यभूत एव, अन्यथा प्रपञ्चान्तर्गतस्य शास्त्रस्यापि मिथ्यात्वेन तज्जनितस्य ज्ञानस्य सम्यक्त्वमनुपपन्नं भवेत् तथात्वे च सम्यग्दर्शननिवन्धनमोक्षवादोऽपि लयं गच्छेत्। नहि मनोरथशतसञ्जनितानामपि मोदकानां रसनामोदसाधनतामुपलभामहे, नापि मृगतृष्णिकासलिलधारया पश्यामः सुतरामपि भ्रान्तानाम-भिषेकादिकं कृत्यम्। सविस्तरमिदमाकरेषु द्रष्टव्यम्।

ज्ञानादिकं जीवस्यापि धर्म्मः, जीवगुणभूतस्य ज्ञानस्य संसारदशायां कर्म्मणा सङ्कोचः, कर्म्मवन्धविलये च मोक्षदशायां विकाशः सम्पद्यते। अत एव सकामकर्म्मपरित्यागेन भक्तिविशुद्धमन्तःकरणमादधानस्य जीवस्य पुरुषोत्तमः समाराधनीयः, स च भगवान् यदा तमिमं भक्तं स्वीयत्वेनाङ्गीकुरुते, तदेव भगवता सह निरुपद्रवमनन्तभोगलाभः। सैवावस्था मुक्तिरिति तदेव सामीप्याद्यन्यतमं रूपमिति सर्व्वमतसंग्रहे लभ्यते। यदुक्तं 'युगे युगे मुमुक्षवो जीवा वासुदेवसङ्कर्षणप्रद्युम्ना-निरुद्धाख्यचतुर्व्यूहात्मनो भगवतः श्रवणकीर्त्तनध्यानपूजनानि भक्तिश्रद्धा-पूर्व्वमनुतिष्ठन्तो भगवत्प्रसादेन जन्मादिसंसारकर्त्रीं तन्मायामतिलङ्घ्य सेवानुरूपं सालोक्यसारूप्यसामीप्यसायुज्यलक्षणं मोक्षमिच्छन्ति।" इति। सा च संसारविलक्षणावस्था जीवतो लौकिकदेहावच्छिन्नस्य न

सम्भवति, सति कर्म्मसम्पादितलौकिकशरीरे तत्रावश्यं भोक्तव्यानां सुखदुःखादीनां परिहातुमयोग्यत्वात्। प्राकृतेन शरीरेणाप्राकृतरूपरसादिभोगासम्भवाच्च। अत एव तादृशमोक्षस्य लौकिकशरीरपातापेक्षतया नैतन्मते जीवन्मुक्तेरभ्युपगमः शक्यः सम्भावयितुम्। तत् लौकिकदेहवियोगादनन्तरं जीवो दिव्यशरीरमुपादाय नित्यविभूतिसंस्थः सकलकल्याणगुणास्पदं परमात्मानं याथातथ्येनानुभवन् परमात्मसङ्कल्पसम्भवाननेकदिव्यभोगानुपभुञ्जानः स्वस्य परमात्मकिङ्करतां भावयन् तदीयप्रीतिकारितां सेवां कुर्व्वाणः सकलदुःखमुक्तः परममोदमाश्रयते। अत एवोक्तं परमसंहितायां—"किङ्करा मम ते नित्यं भवन्ति निरुपद्रवाः" इति। एतन्मते सर्व्वज्ञत्वादिविषये मुक्तानामीश्वरसाम्यमेव, केवलं परमेश्वरे सर्व्वकर्तृत्वमेवाधिकम् (१)। उपपादितमिदं पाञ्चरात्ररहस्ये। एतन्मते पञ्चरात्रागमः सर्व्वथा प्रमाणमङ्गीक्रियते (२) अन्यत् सर्व्वमाकरेभ्यो ज्ञातव्यम्।

निर्गुणब्रह्मवादिनस्तु सर्व्वमिदं जगद् ब्रह्मणि परमार्थभूते सच्चिदानन्दरूपे अध्यस्तमाचक्षाणाः अनादिनिर्व्वचनीयाविद्यया संसारं निर्व्विशेषब्रह्मजीवात्मैकत्वविद्यया च ब्रह्मरूपपरमानन्दावाप्तिलक्षणां मुक्तिं ब्रुवते। एतन्मते ब्रह्मैव वस्तु, अन्यत् सर्व्वं अवस्तु, अत एव प्रपञ्चो मिथ्या। स्वाप्नपदार्थस्य मिथ्यात्वेऽपि सत्यभूतभीत्यादिजनकतावत्

---

(१) 'प्रसन्नात्मा हरिर्भक्त्या निदिध्यासनरूपया। अविद्यां कर्म्मसङ्घातरूपां सद्यो निवर्त्तयेत्। ततः स्वाभाविकाः पुंसां ते संसारतिरोहिताः। आविर्भवन्ति कल्याणाः सर्व्वज्ञत्वादयो गुणाः। एवं गुणाः समानाः स्युर्मुक्तानामीश्वरस्य च। सर्व्वकर्तृत्वमेवैकं तेभ्यो देवे विशिष्यते।" (पाञ्चरात्ररहस्ये)।

(२) 'अलाभे वेदमन्त्राणां पञ्चरात्रोदितेन हि। मार्गेण प्रवर्त्तन्ते ते मां प्राप्स्यन्ति मानवाः।" इति (वराहपुराणम्)।

शास्त्रस्य प्रपञ्चान्तर्गतस्य मिथ्यात्वेऽपि सम्यक्ज्ञानद्वारा मोक्षसाधनता। महावाक्यादिभिः शब्दैरपि जनिते आत्मसाक्षात्कारे सद्य एव अविद्यानिवृत्तिः। सुखदुःखातीतात्मसाक्षात्कारे लौकिकशरीरसत्त्वदशायामपि जीवतो मुक्तिरभिमता, अनन्तरं प्रारब्धक्षये विदेहमुक्तिः ब्रह्मस्वरूपावस्थितिलक्षणा। तदानीं जीवब्रह्मणोरभेदः, अहंभावशून्यता, लेशतोऽपि सुखदुःखराहित्यञ्च। सर्व्वमन्यत् आकरेभ्यो ज्ञेयम्। न च परमानन्दभूतस्य नित्यस्य ब्रह्मणः चिरमेवाप्तत्वेन कथं अनाद्यविद्यानिवृत्त्यनन्तरं तदाप्तिः सुसङ्कटते इति वाच्यं, कण्ठचामीकरादिन्यायेन तस्या अदोषत्वात्। सर्व्वमिदं निराकृतं श्रीमता गदाधरेण स्वयमेव शिवरामेण च स्वटीकायामस्माभिरपि दीपिकायां मुक्तिवादे इति नेह विस्तरमाश्रयामः। सन्ति चान्येऽपि शैवदर्शनाद्यास्तिकमतभेदास्तेषामुपादानेन सुतरां ग्रन्थकलेवरपुष्टिशङ्कया केवलमियन्मात्रमुपादायैव परिशेषमारचयामः। मतविशेषेषु सेयं मुक्तिर्द्विविधा जीवन्मुक्तिः परममुक्तिश्चेति। तयोरेव परा अपरा चेति सदेहा विदेहेति जीवन्मुक्तिः कैवल्यमित्यादीनि नामधेयानि उपलभ्यन्ते। मिथ्याज्ञानस्य तत्त्वज्ञानेन सत्यामपि विनिवृत्तौ प्रारब्धक्षयं यावत् शरीरसत्ताया अवश्यम्भावेन शरीरक्षयकालपर्य्यन्ता जीवन्मुक्तिः, सा च सम्प्रदायाविच्छेदसम्पादनाय अवश्यमङ्गीकार्य्या, अन्यथा अज्ञातब्रह्मादितत्त्वस्य उपदेशकत्वासम्भवेन ब्रह्मतत्त्वोपदेशादौ गुरुशिष्यभावस्यैव विलोपप्रसङ्गात् इत्यादिकमूह्यम्। प्रारब्धक्षयात् परतश्च देहविनिवृत्तौ विदेहकैवल्यमिति। तच्च मतं "विमुक्तश्च विमुच्यते" इत्यादिश्रुतिभिरनुगृहीतं भवति। विशेषास्तु अन्यत्र अनुसन्धेयाः।

तदिदं कैवल्यमधिकृत्य गदाधरेण न्यायमतप्राशस्त्यमनुपलायता मुक्तिवादो नाम ग्रन्थो व्यरचि। तत्र आदौ प्रयोजनप्रकरणमुपन्यस्य परमप्रयोजनस्य मुक्तेः साधकं प्रमाणञ्च समुपस्थाप्य स्वमतसिद्धमुक्ति-

स्वरूपं प्रक्रम्य अधिकारिनिरूपणादिमनुपन्यासेन परमतनिराकरण-प्रस्तावे प्रथमतः अत्यन्तदुःखानुत्पादरूपप्राभाकरमतं प्रतिक्षिप्तं। तदनन्तरं दुःखबीजदुरितात्यन्तविनाशस्य मुक्तिस्वरूपता निराकृता। तत एकदण्डिवैदान्तिकमतप्रतिक्षेपः कृतः, तदनन्तरं त्रिदण्डिवैदान्तिक-मतदूषणम्, तदनन्तरमविद्यानिवृत्त्या बुद्ध्यादिनिवृत्तौ तद्धर्म्मदुःखनिवृत्ते-र्मोक्षताकल्पः प्रतिक्षिप्तः। अनन्तरं सांख्यमतं परतो नित्यसुखसाक्षात्-कारोऽपवर्ग इति भट्टमतं प्रतिक्षिप्य स्वमतं सम्यग्व्यवस्थापितं। ततोऽपि मुक्तिकारणविचारेण समापितो ग्रन्थः। के वा न्यायपरा न जानन्ति यथा 'मितञ्च सारञ्च वचो हि वाग्मिता' इति दीधितिकारादिसरणि-मवहेलयन्नपि गदाधरो दीधितिरहस्यसम्प्रकाशने अनन्यसाधारणमेव नवनवोन्मेषमर्थानामुद्भावयदिति। किन्तु मुक्तिवादग्रन्थनिर्म्माणप्रसङ्गेन सत्यपि तस्य नानाविधे अपवर्गत्वादीनामर्थसमाजग्रस्तत्वादि विचारनैपुण्ये तथा परमात्मसाक्षात्कारादेः मोक्षकारणत्वादिविवेकचातुर्य्ये ईश्वरा-नुमानग्रन्थीयमुक्तिप्रकरणस्य गङ्गेशप्रस्तुतस्य प्रायेण सर्व्वत्र अनुकरणस्यैव दृष्टचरत्वेन तथा प्रकर्षो नैतेन सम्भावयितुमर्हामः। विशेषजिज्ञासव ईश्वरानुमानग्रन्थीयान्तिमभागे निबद्धं "परमप्रयोजनमनुमानस्यापवर्ग." इत्यादि प्रारभ्य अन्तं यावत् मुक्तिप्रकरणं यद्यालोचयेयुस्तदैव सर्व्वमतिरो-हितं तेषां सम्भवेत्। यथाहि सामान्यनिरुक्तिप्रभृतिग्रन्थेषु अव्यापकीभूत-विषयताशून्यत्वविशिष्टद्वयाघटितत्वादिकल्पानां प्रथमाविष्कारकत्वेन ग्रन्थान्तरे गदाधरभट्टाचार्य्याणामसीमप्रतिभाप्रकर्षः समुन्नेतुं शक्यते, न तथा अलत्येन विषयेण, प्रायशः सर्व्वेषामेव युक्तितर्कादीनां गङ्गेशोपाध्यायेनैव संस्पृष्टत्वादिति।

स चायं गदाधरो जन्मना वगुरान्तर्गतं (?) लक्ष्मीपाशास्थान-मलञ्चकार, विद्योन्नतिस्थानमस्य नवद्वीपम्, अस्य पितुर्नाम जीवा-चार्य्यगोस्वामीति, तदानीं तत्पूर्व्वपुरुषाणां बहुलशिष्यसत्तया गोस्वामी-

त्याख्या समभवत्। परतो गदाधरभट्टाचार्य्यस्य पाण्डित्यप्रभासम्बद्धिभि: साकमेव गोस्वामीत्याख्या विलोपं जगाम, स्वपदे च प्रतिष्ठापयामास भट्टाचार्य्येत्याख्याम्। अत एव तद्वंश्या अद्यापि भट्टाचार्य्य-संज्ञामात्मनाम्नामन्ते प्रयोज्य स्वनामानि प्रकाशयन्ति। गदाधरस्य गुरु: प्रथितनामा हरिरामतर्कवागीश:। तस्य समीपत: गदाधरेण विशेष-व्याप्तिपर्य्यन्तमधीतमिति किंवदन्ती श्रूयते। जीवनकालश्चास्य सप्तदश-शताब्दीमध्यभाग: तत्पूर्व्वकालो वा। यत: श्रीगदाधरनिर्म्मित-व्युत्पत्तिवादस्य एका हस्तलिखितपुस्तिका पञ्चविंशत्यधिकषोड़श-शताब्दीसम्बन्धिनी लब्धा। स्वीयगुरूणां जीवनावसानात् परं तत्पदे तदीयविद्यालये एव गुरुपदमधिकृत्य तेन शिष्याणामध्यापना जीवनान्त-कालपर्य्यन्तं कृता इत्येवं सर्व्वं अस्य वृत्तस्य कतिपये अंशा: महामहोपाध्यायसतीशचन्द्रविद्याभूषणमहोदयस्य भारतीय न्यायप्रत्न-तत्त्वनिबन्धादस्माभि: प्राप्ता:। अस्मत्परमसुहृद: गदाधरवंशधरस्य श्रीरामगोपालतर्कतीर्थभट्टाचार्य्यात् श्रुतं यथा अस्य पिता जीवदेव-गोस्वामी, जीवनकालश्चास्य १००६ बङ्गाब्दात् तदीयजन्मकालात् १११० बङ्गाब्द: तदीयमृत्युकालपर्य्यन्त:।

अथास्य मुक्तिवादग्रन्थस्य मुद्रापणे कथमेवं प्रयासोऽस्माकमिति प्रश्नस्य उत्तरं विधातुं किमपि वक्तव्यं तदुच्यते, नव्यनैयायिकानां सत्यपि पदार्थतत्त्वादिकमधिकृत्य भूयोविचारप्रवन्धे मोक्षादिविषयका विचारा विशेषतो न प्रवर्त्तन्ते, परन्तु तत्त्वनिर्णयफलकविज्ञानमवश्यमपेक्षितमेव, तदर्थमस्य प्रचार: प्रयोजनं नातिक्रामति। एवञ्च हरिनाथतर्क-सिद्धान्तसम्पादितमुक्तिवादग्रन्थे सत्यपि मुद्रापिते तस्य सम्प्रति सुतरां दुर्लभत्वादिदोषात् यथाशक्ति निर्दोषग्रन्थस्य बहुप्रचारार्थमयमुद्यम:, विशेषतश्च शिवरामकृता काचन टीकास्माभि: प्राचीना समुपलब्धा, हरिरामटीकाया: सैवावलम्बनमिति तदवलोकनेनास्माभि: सम्भाव्यते,

सापि मुक्तिवादविवेचकानां विज्ञाने साहाय्यं विधातुं समर्था स्यात्। अस्य शिवरामस्य कोऽपि सविशेषः परिचयो नासाद्यते। केचित्तु कल्पमञ्जरीग्रन्थकारं शिवराममेव अमुं सम्भावयन्ति, केचिदिमं वारेन्द्र-भूमिपण्डितं स्मरन्ति; तत्र तत्र विशेषप्रमाणाभावाद् वयमुदासीनाः। भवतु यः कोऽप्ययं शिवरामः, अस्य नानादर्शनेषु परा अभिज्ञतासीदिति टीकावलोकनेन निर्णेतुं शक्यते। तेनापि मुक्तिवादग्रन्थस्य सर्व्वेंऽशाः न तथा परिष्कृता, येन साधारणानां तद्विषये सविशेषं विज्ञानं भवेत्, अत एव लघुशक्तिकेनापि मया भीतभीतेनेव मुक्तिदीपिकानाम्नी काचन संस्कृतटीका तात्पर्य्यविवरणाख्या वङ्गभाषामयविवृतिश्च काचित् अनेन संयोजिता, तत्र मे सुतरां लघुशक्तिकस्य तत्त्वेषु बहुलेष्वेव सन्देहदोषग्रस्तस्य पदे पदे दोषसम्भावनायां नियतायामपि केवलं सतां करुणापरतां स्मारं स्मारं साहसमिदमातिष्ठामि। सुप्रतिष्ठिता सुचिरं भारतवर्षे संस्कृतसाहित्यपरिषत् सर्व्वप्रयत्नेन प्राचीनग्रन्थप्रकाश-रक्षणादिविधौ बहुभिरुपायैः प्रवर्त्तमाना प्रकाशकृत्यमिदमङ्गीकुरुते। एतत् सम्पादनव्यापारे तत्संगृहीतसुदुर्लभपुस्तकबहुलग्रन्थागारसाहाय्य-मेव नः परमोपकारकमभूदिति सप्रश्रयं सकृतज्ञताकं सप्रशंसञ्च तद्गुणतिं अन्तःकरणनिर्व्वन्धेन वयं कामयामहे। अत्र मूलपुस्तकादर्श-भूतानि षट् पुस्तकानि समुपलब्धानि। तत्र एकं मुद्रापितं, अपराणि च हस्तलिखितानि। तेषु कचिह्नितं पुस्तकं कोटालिपाड़-वास्तव्यनैयायिकप्रवर- मदीयपितृदेव-श्रीयुक्तहरिदासतर्कतीर्थमहाशयेन, गचिह्नितं तथा ङचिह्नितं पुस्तकं धानुकावास्तव्यनैयायिकप्रवरश्रीयुक्त-हारकानाथन्यायशास्त्रिमहाशयेन सानुग्रहं प्रदत्तम्, अपराणि सर्व्वाण्येव परिषद्ग्रन्थागारादुपलब्धानीति। सर्व्वत्रैव पुस्तकभेदेन पाठान्तराणि पादटीकारूपेण प्रदत्तानि। अस्य ग्रन्थस्य 'मुक्तिवाद' इति प्रसिद्धि-मत्त्वेऽपि शिवरामटीकोक्तिवशात "नव-मुक्तिवाद" इति संज्ञा गृहीता।

ग्रन्थस्यास्य अन्तिमे भागे चिह्नितमुद्रितपुस्तकात् प्राप्तं साम्प्रदायिक-प्राचीनसूक्तिविवरणमपि अस्माभिरत्र प्रदत्तम्, शिवरामटीकाया एक-मेवादर्शपुस्तकमिति तत्र निर्द्दोषतायां सुधिय एव प्रमाणम्। आशंसामहे यदनेन कियानप्युपकारो दार्शनिकानां सम्भवेत्। परं प्रथमे तावदस्मिन् प्रक्रमे बहव एव दोषाः सम्भविष्यन्ति, ते च यथा भाग्यवशात् सम्भाव्ये प्रक्रमान्तरे प्रक्षालयितुमर्हामस्तथा सद्भिरनुग्रहेण विज्ञापना कर्त्तव्या। ग्रन्थपाठे तु 'नाभुक्तं क्षीयते कर्म्म' इत्यत्र चिह्नित पुस्तकानुसारात् 'माऽभुक्तं क्षीयते कर्म्मे'ति, तथा 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये कैवल्येन' इत्यत्र चिह्नितपुस्तकस्य तथा सोसाइटीमुद्रित-श्वरानुमानग्रन्थस्य प्रामाण्येन 'तस्य तावदेव चिरं यावन्न विमोक्षः, अथ सम्पत्स्यते कैवल्येन' इति प्रकारान्तरमुपात्तम् इति ध्येयम्। अन्ते तावत् इदमवश्यं मया वक्तव्यं, यत् सुप्रसिद्धनैयायिकचक्रविकाशतर्क-सिद्धान्तकृत सूक्तिवादटीका तथा काशीप्रवासिनां तत्रभवतां नैयायिक-कुलमण्डनानां श्रीमतां फणिभूषणतर्कवागीशमहाशयानां न्यायदर्शन-भाष्यविवृतिप्रभृतिकमस्मिन् उद्यमे नः परमं साहाय्यं समपाद-यतामिति तेभ्यो नतिशतविज्ञापनेन कृतज्ञतामावेदयामः। अल-विशेषे च शिवकुमारविद्यार्थिभवनाध्यापकस्य नैयायिकप्रवरस्य सुहृदः श्रीमतः चण्डीचरणतर्कतीर्थस्यापि प्रतिभा कृतज्ञतां नः समुत्पादयति। भवतु यथा तथा वा केवलमिदमन्तिमं निवेदनं विज्ञतमेषु, यथा—

दयालवो महात्मानः क्रियतां मे दयालवः।
बहुष्वपि दोषेषु गुणलेशो विविच्यताम्। इति शम्—

१३२१ वङ्गाब्दे
दोलयात्रापौर्णमास्याम्

निवेदनमिदम्—
सुधीजनविधेयस्य
श्रीकालीपदशर्म्मणः

# नवमुक्तिवाद-विषय-सूची

| विषयः | पृष्ठा |
| --- | --- |
|  |

विषयः पृष्ठा

विषयः पृष्ठा

विषय:          पृष्ठा:

इति नवमुक्तिवाद-विषय-सूची समाप्ता ॥

# शुद्धिपत्रम्।

| अशुद्धम् | पृः | पं | शुद्धम् |
| --- | --- | --- | --- |
| स्वल्पसङ्करः | १३ | २१ | स्वल्पः.सङ्करः |
| प्रयजनप्रकरोणम् | ,, | १ | प्रयोजनप्रकरणम् |
| स्वर्गसुधा | ,, | २२ | पुण्यसम्भारोपनीतस्वर्गसुधा |
| विजातीयात्ममनः | ३४ | ५ | विजातीयात्मप्राण |
| समासग्रस्तत्वं | ३७ | १६ | समाजग्रस्तत्वं |
| उभया | ११२ | १७ | उत्तरा |
| पूर्व्वांशया | ४१ | २० | पूर्व्वावयो |

गदाधरप्रणीत-

# नवमुक्तिवादः

## मूलम्

ॐ नमः शिवाय। प्रयोजनमुद्दिश्यैव पुमांसस्तदुपाये प्रवर्त्तन्ते, अतः शास्त्रस्य प्रयोजनं प्रथमतः प्रदर्शयन्ति * शास्त्रकृतः † ।

## शिवराम-टीका

ओँ नमः शिवाय :—

प्रणम्य शान्तं हरमद्वितीयं
वेदान्तवेद्यं जगदेकहृद्यम् ।
गदाधरोक्ते नवमुक्तिवादे
तनोति टीकां शिवरामनामा ॥

अथ शास्त्रमात्रं वचनरूपतया परार्थं यद्यव्यवस्थापितप्रयोजनं भवेत्, भवेत्तर्हि परस्याप्रवृत्त्या व्यर्थमेव तदित्यतस्तत्र प्रयोजनं व्यवस्थापयितु "यमर्थमधिकृत्य प्रवर्त्तते तत् प्रयोजन"मिति (१म अ, १म आ २४ सूत्रम्) न्यायसूत्ररूपशास्त्रकृत्प्रदर्शितप्रयोजनवत्तामवाप्याह प्रयोजनमिति तथाच नात्र स्वतन्त्रप्रयोजनवत्त्वं प्रकरणत्वादिति भावः। एतेन शासनात् शास्त्रमिति न्यायात्, "प्रवृत्तिर्वा निवृत्तिर्वा पुंसां येनोपदिश्यते

---

* दर्शयन्ति (घ)।    † शास्त्रकाराः (घ)।

नित्येन कृतकृत्येन शास्त्रं शास्त्रविदो विदुः ॥" इति निबन्धाच्च वेदस्य प्रवर्त्तकत्वोपपादकत्वेन वेदनिरूपणानन्तरं प्रवर्त्तकज्ञाननिरूपणमिव प्रवर्त्तकत्वरूपशास्त्रत्वेऽपोद्घातसङ्गत्या मुक्तियुक्तिनिरूपणमिति सूचितम्; तेन च शास्त्रमात्रसङ्गतमेव तदिति बोध्यम्।

उद्दिश्य इदमिष्टसाधनमित्यनुसन्धाय। अत्र अनुसन्धानप्रकारतावच्छेदककोटिनिविष्टं सुखत्वादिकमेव बोध्यम्—न तु वक्ष्यमाणस्वतःप्रयोजनत्वादिकं तथाविधसाधनतायाः प्रवृत्त्यनुपयोगादिति। प्रथमतः—प्रथमत एव, न मध्ये, नान्ते वेति शेषः। तेन प्रथमतः प्रयोजनाप्रतिपादने प्रथमवाक्यस्य निष्प्रयोजनकत्वबुद्ध्या तदध्ययनाप्रवृत्त्या तदर्थाज्ञानेन तदर्थनिरूपितस्वसम्बन्धिकसङ्गतत्वाज्ञानेन मध्यमान्तिमवाक्ययोरपि अध्ययनाप्रवृत्तिः स्यादिति सूचितम्। एतेन "नासङ्गते प्रवृत्तिः सताम्" इति व्यवहारोऽप्युपपद्यते।

यद्यपि प्रथमवाक्ये प्रायशः स्वार्थप्रतियोगिकसङ्गतिमदर्थकत्वमेव सर्वत्र दृश्यते, तथाप्यत्र शास्त्रत्वलक्षणप्रतियोगिकस्वार्थानुयोगिकसङ्गतिमदर्थकत्वमधिकं बोध्यम्। प्रदर्शयन्ति उद्देशलक्षणपरीक्षाभिः ज्ञापयन्ति।

## मुक्तिदीपिका

दृष्टं यतः स्थावरजङ्गमं जगत्<br>
स्वकर्म्मभोगाय विमुक्तिहेतवे।<br>
शिवैकनिष्ठं विनिवृत्तकल्मषं<br>
तमेव वन्दे पितृवेशमीश्वरम् ॥

यः पौरन्दरतेजसेव सुतरां पाण्डित्यकृत्यश्रिया<br>
संज्ञामाप पुरन्दरेति जनकः श्रीनाथचूडामणेः।

तद्वंशे हरिदासनामविबुधो यस्तर्कतीर्थोत्तम-

स्तत्पुत्रो नवमुक्तिवादविवृतिं कालीपदो वक्ष्यते ।

ग्रन्थारम्भे निर्व्विघ्नेन प्रारिप्सितपरिसमाप्तिकामो ग्रन्थकृत् "समाप्तिकामो मङ्गलमाचरे"दित्याद्यविगीतशिष्टाचारानुमितश्रुतिप्रमाणतो मङ्गलाचरणस्य प्रकृतकृत्यसमाप्तिफलकत्वमवधारयन् — "ज्ञानञ्च शङ्करादिच्छे"दित्यादिवचनैः शास्त्रसमाप्तिपरमोपयोगिविज्ञानेषु च शिवरूपिणः परमात्मन एव सामर्थ्यमधिगच्छन् शिवप्रतीकपरमात्मनमस्काररूपं मङ्गलं प्रस्तौति 'ओं नम' इत्यादि । परमात्मन ईश्वरस्यैव शिवरूपत्वमित्युपपादितमनुमितिप्रकरणे — "ओं नमः सर्व्वभूतानी"त्यादिनमस्कारश्लोकव्याख्यानावसरे स्वयमेव ।

'प्रयोजनमुद्दिश्यैव' इत्यत्र एवकारेण प्रयोजनमनुद्दिश्य प्रवृत्तिर्व्यवच्छिद्यते । तदुक्तं "प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तते", इति । अतएव च न्यायसूत्रवृत्तिकृद् विश्वनाथोऽपि "प्रयोजनमनभिसन्धाय प्रेक्षावन्तो न प्रवर्त्तन्ते, अतः प्रथमं प्रयोजनमभिधानीयं. तथाचाहुः—सिद्धार्थं सिद्धसम्बन्धं श्रोतुं श्रोता प्रवर्त्तते । शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः" । इति प्रयोजनसूत्रवृत्तौ व्याचष्टे । अस्य शास्त्रस्य मुक्तिनिरूपणशास्त्रत्वेन मुक्तिज्ञानद्वारा मुक्तौ प्रवर्त्तकत्वात् मुक्तिफलकत्वम् । मुक्त्या चास्य शास्त्रस्य प्रयोज्यप्रयोजकभावः प्रतिपाद्यप्रतिपादकभावश्च सम्बन्धौ । मुक्तिज्ञानेन शास्त्रज्ञानस्य च जन्यजनकभावः सम्बन्धः ।

शास्त्रकृत इति बहुवचनेन शास्त्रादौ प्रयोजनप्रदर्शनस्य सार्व्वत्रिकत्वं सूच्यते । पुमांस इति बहुवचनेन च सर्व्वस्या एव प्रवृत्तेरिष्टसाधनताज्ञानाधीनत्वं व्यवस्थाप्यते ।

अनेन सन्दर्भेण "यमर्थमधिकृत्य प्रवर्त्तते तत् प्रयोजन"मिति न्यायशास्त्रानुशिष्टं प्रवृत्तिहेत्विच्छाविषयत्वरूपप्रयोजनसामान्यलक्षणमपि निरुक्तं भवति, तेन तद्धर्म्मावान्तरधर्म्मप्रकारकज्ञानगोचरेच्छां प्रति तद्धर्म्मज्ञानस्य मुख्यतया इष्टसाधनताज्ञानधर्म्मितावच्छेदकसम्पादकतया वा कारणत्वात् सामान्यमप्रतीतवतो विशेषजिज्ञासानुदयेन नवेत्यादिग्रन्थेन विशेषनिरूपणस्य अनाकाङ्क्षिताभिधानत्वापत्तिरिति पर्य्यनुयोगोऽपि निरस्तः ।

अथ स्त्री-नपुंसकयोरपि प्रवृत्तेरिष्टसाधनताज्ञानाधीनतया तत्परित्यागेन पुमांस इति विशेषनिर्द्देशः कथमिति चेन्न "'व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान्"

इत्यादिसांख्यकारिकादाविव प्रकृते पुमांस इत्यस्य स्त्रीनपुंसकादिसाधारणात्ममात्रपरतया तादृशशङ्कानवतारात्। एवमेव पुमस्शब्दपर्य्यायस्य पुरुषादिशब्दस्य "असङ्गो ह्ययं पुरुष" इत्यादिश्रुतिप्रकरणेषु प्रयोगस्य बहुशो दृश्यमानत्वात्, नहि तत्र लिङ्गविशेषावच्छिन्नात्मपरत्वं सम्भवदुपपत्तिकं स्यादिति ध्येयम्। अन्ये तु पुमांस इत्यस्य कृतिसाध्यताज्ञानवन्त इत्यर्थं परिकल्पयन्तः समादधते, तन्न विचारसहं, पुमांस इत्यस्य तादृशार्थकत्वे साधकाभावात् कृतिसाध्यताज्ञानस्यैव प्रवृत्तेः कारणान्तरस्यापि वक्तव्यत्वापाताच्चेत्यादि बहुतरमूह्यम्।

**शिवरामटीकोपरि**—परस्याप्रवृत्त्येति प्रयोजनाकथनेन प्रयोजनज्ञानाभावात् तद्घटितेष्टसाधनताज्ञानरूपहेत्वभावेन प्रवृत्तिविरहादित्यर्थः।

प्रकरणत्वादिति—प्रकरणलक्षणं यथा—"शास्त्रैकदेशसम्बद्धं शास्त्रकार्य्यान्तरे स्थितम्। आहुः प्रकरणं नाम ग्रन्थभेदं विपश्चितः।" इति। (पराशर—उप-पुः-१८।११।२२) शास्त्रप्रकरणयोः भिन्नप्रयोजनत्वे शास्त्रान्तरताप्रसङ्गः। उक्तञ्च वेदान्तसारग्रन्थे "अस्य वेदान्तप्रकरणत्वात् तदीयैरेव अनुबन्धैस्तद्वत्तासिद्धेः न ते पृथगालोचनीयाः"। इति। इदमिष्टसाधनमित्यनुसन्धायेति उद्दिश्यान्ततात्पर्य्यविवरणं अन्यथा प्रयोजनमित्यस्य कर्म्मतानुपपत्तेः।

उद्देशेत्यादि—नाममात्रेण सङ्कीर्त्तनमुद्देशः। लक्षणमसाधारणधर्म्मः, असाधारणत्वञ्च लक्ष्यतावच्छेदकसमनियतत्वम्। परीक्षा च परमतनिराकरणपूर्व्वकस्वमतव्यवस्थापनम्।

## তাৎপর্য্যবিবরণ

জগতে যত প্রকার জীব আছে, তাহারা সকলেই কোনও কার্য্যে প্রবৃত্ত হইবার সময় ফলকামনা করিয়াই প্রবৃত্ত হইয়া থাকে, ক্ষুধাতুর ব্যক্তি ক্ষুধার উপশমের জন্য ভোজনে প্রবৃত্ত হয়, তৃষ্ণাতুর ব্যক্তি তৃষ্ণার উপশমের জন্য জলপানে প্রবৃত্ত হয়, এবং রোগী রোগযন্ত্রণানিবারণের জন্য কটুরসযুক্ত ঔষধসেবনেও প্রবৃত্ত হইয়া থাকে।

যে কার্য্যের ফল আমাদের বিদিত নহে, সে কার্য্যে আমাদের কখনই

বৃত্তি হয় না। যেমন অতিশৈশবে যে পর্য্যন্ত বালক জানেনা, যে শাস্ত্র ধ্যয়ন করিলে তাহার জ্ঞান ও সুখ হইবে, সে পর্য্যন্ত বহু তাড়না রিয়াও তাহাকে শাস্ত্রাধ্যয়নে প্রবৃত্ত করা যায়না; আবার যখন সেই লক বয়ঃপ্রাপ্ত হইয়া অধ্যয়নের সুফল উপলব্ধি করিতে পারে; তখন না তাড়নে স্বয়ংই উক্ত কার্য্যে প্রবৃত্ত হইয়া থাকে। এইরূপ বহু লৌকিক বিষয়ের দৃষ্টান্তে প্রমাণিত হয় যে, কার্য্যের ফল না বুঝিলে াকের তাহাতে প্রবৃত্তি অসম্ভব; এইজন্যই শাস্ত্রকারগণ শাস্ত্রের প্রারম্ভে াধারণকে নিজ শাস্ত্রপাঠের ফল বুঝাইয়া উহাতে প্রবৃত্ত করিবার জন্য য়োজন প্রকাশ করিয়া থাকেন। সকল শাস্ত্রের আদিতে স্পষ্টরূপে য়োজনের উল্লেখ না থাকিলেও একটু পর্য্যালোচনা করিলেই প্রয়ো-নাদি প্রতীত হইয়া থাকে।

এই গ্রন্থাংশ আলোচনা করিলে "যাহার ইচ্ছা প্রবৃত্তি ন্মাইয়া দেয়, উহাই প্রয়োজন" এইরূপ প্রয়োজনলক্ষণও বুঝিতে পারা ায়, অতএব সামান্য লক্ষণ না বলিয়া পরে বিশেষ লক্ষণের উল্লেখ-ायুক্ত দোষ হইবেনা। এস্থলে প্রসঙ্গক্রমে এ কথাও বুঝিয়া রাখিতে হইবে যে এই মুক্তিবাদ গ্রন্থে মুক্তির বিষয়ই প্রধানতঃ প্রতিপাদিত হইবে, অতএব মুক্তিপদার্থই ইহার প্রতিপাদ্য। মুক্তিজ্ঞান হইলেই মুক্তির াতি প্রবৃত্তি হওয়া সম্ভব হয় এবং তাহাতেই মুক্তিলাভ করা যায় বলিয়া ক্তিই এই শাস্ত্রের চরম প্রয়োজন।

---

## मूलम्

तत्र स्वतःप्रयोजनं सुखं तद्भोगो दुःखाभावश्च। तत्त्वञ्च मन्येच्छानधीनेच्छाविषयत्वम्, न तु प्रयोजनान्तराजनकत्वे

सति प्रयोजनत्वम् ; सुखसाक्षात्काररूपं * भोगं प्रति विषयतया जनके सुखे अव्याप्तेः ।

## शिवराम-टीका

ननु प्रयोजनत्वं इच्छाविषयत्वं, तच्च शास्त्रार्थतद्बोधादावप्यस्ति ; नहि तत्तन्मात्रार्थं विशेषदर्शिप्रवृत्तिरित्यत आह तत्रेति । तत्र शास्त्रे प्रवृत्त्युपयोगीति शेषः । ननु स्वं स्वीयं स्वेच्छीयमिति यावत्, साक्षात्परम्परासाधारणस्वसम्बन्धिमात्रस्य स्वीयत्वात् । तथाचोक्तं तर्कग्रन्थे मणिकृता "क्वचित् स्वतः सिद्धः शङ्काविरहः" । इति । तच्च स्वेच्छीयकारणजातं अन्येच्छया घटितमघटितञ्चेति कल्पद्वयम् ; तत्र आद्यकल्पे [ स्वेच्छीय ] इच्छाघटितकारणकलापजन्येच्छाविषयत्वं गौणप्रयोजनरूपोपायपरम्परासाधारणमिति द्वितीयकल्प एवादरणीयः । तत्रापीतरांशस्य गौरवादप्रयोजनत्वाच्चानिवेशेन अन्येच्छानधीनत्वं पर्य्यवसायाद्द तत्त्वञ्चेति । वस्तुतस्तु स्वतस्त्वं स्वारसिकत्वं निरुपाधिकत्वमिति यावत् । स्वं स्वीयं असाधारणं धर्ममेव विज्ञायेति स्वत इत्यस्यार्थादिति ; तथा च इष्टसाधनत्वाविषयकज्ञानजन्येच्छाविषयत्वं तदिति सारम् ।

## मुक्तिदीपिका

तत्रेति निर्द्धारणे सप्तमी, प्रकृते अधिकरणत्वादिरूपाणामर्थानामयोग्यत्वात् । तेषु प्रयोजनेषु मध्ये इत्यर्थः । आदौ प्रयोजनमित्येकत्वमिर्द्देशेऽपि व्यक्तिभेदमुररीकृत्य बहुत्वं न विरुध्यते । अथवा तत्रेति सप्तम्यर्थो विषयता, तत्पदञ्च पूर्व्वपरामृष्टप्रयोजनप्रदर्शनपरं, विषयतायाश्च सप्तम्यर्थभूतायाः स्वतःप्रयोजनपदार्थे अन्वयात् प्रयोजनप्रदर्शनविषयीभूतं स्वतःप्रयोजनमित्यर्थो लभ्यत इत्याहुः ।

---

* उपभोगं (च) ।

लक्षणानन्तरमेव लक्ष्यस्य निरूपणीयत्वेऽपि सुखदुःखाभावयोरिव सुखसाक्षात्कारे स्वतःप्रयोजनत्वस्य मणिकारादिभिः "सुखी स्यामित्युद्दिश्य प्रवर्त्तते, न तु सुखमहं जानीयामिति सुखमेव तथा, न तु तदवगमः, तस्यावश्यकत्वेन अन्यथासिद्धत्वात् गौरवाच्च" इत्यादिसन्दर्भैरीश्वरानुमानग्रन्थे अनङ्गीकारात् तत्साधारणलक्षणस्य अतिव्याप्तिशङ्का-कलङ्कः पदनादधीतेति प्रथमतो लक्ष्यनिर्द्देशः। तथा च सुखसाक्षात्कारस्यापि स्वतः-प्रयोजनरूपतया नातिव्याप्तिशङ्केति भावः। सुखविषयकेच्छात्वेन प्रवृत्तिजनकतावत् अनुभवबलात् गुरुणापि सुखसाक्षात्कारविषयकेच्छात्वेन प्रवृत्तिजनकताया उपगमात् न सुखसाक्षात्कारे प्रवृत्तिहेत्विच्छाविषयत्वरूपप्रयोजनत्वहानिरित्यवधेयम्। इदमेव मनसिकृत्य नित्यसुखाभिव्यक्तिर्मुक्ति" रिति भाट्टा व्याचक्षते। न्यायसूत्रवृत्तिकृद् विश्वनाथस्तु "अत्र च निरुपधीच्छाविषयत्वात् सुखदुःखाभावयोर्मुख्यप्रयोजनत्वं तदु-पायस्य तु तदिच्छाधीनेच्छाविषयत्वाद् गौणप्रयोजनत्वम्" इति सन्दर्भेण सुखदुःखा-भावयोरेव स्वतःप्रयोजनत्वमुपपादयति। परे तु तत्र सुखदुःखाभावपदं सुखसाक्षात्-कारस्यापि उपलक्षकमिति समादधते।

तत्त्वम् प्रागुपक्रान्तस्वतःप्रयोजनत्वम्, न तु 'तत्त्वं ब्रह्मणि याथार्थ्ये' इति कोषात् ब्रह्म याथार्थ्यं वा। अन्येच्छेत्यादि:—अन्या स्वभिन्ना या इच्छा तदनधीना तदप्रयोज्या या इच्छा तद्विषयत्वमित्यर्थः। इच्छाविषयत्वमात्रोक्तौ गौणप्रयोजने अतिप्रसङ्गः स्यादिति विशेषणदलम्। तथाच उपायेच्छायाः फलेच्छाधीनतया नातिप्रसङ्गः। सर्व्वासामेव सुखादीच्छाव्यक्तीनां स्वभिन्नपरमेश्वरेच्छाधीनत्वादस-म्भववारणाय स्वभिन्नेच्छायां स्वसामानाधिकरण्यमपि निवेशनीयम्। तेन सुखादीच्छायाः स्वभिन्नस्वसमानाधिकरणेच्छानधीनत्वान्न क्षतिः। अथवा अनधीनत्व-घटकीभूतमधीनत्वं समवायसम्बन्धावच्छिन्नं विवक्षितम्, ईश्वरेच्छाधीनत्वञ्च सुखेच्छादौ न तथा, विषयितया जन्यत्वावच्छिन्नं प्रति तादात्म्येन ईश्वरेच्छायाः कल्पककारणतया तस्य विषयित्वसम्बन्धावच्छिन्नत्वात्। अन्ये तु अन्यपदं जन्यपरं, तेन सुखेच्छादे-रीश्वरेच्छाजन्यत्वमपि न लक्षणदोषाय इति व्याचक्षते, तन्न मनोरमं सति समाधानान्तरसम्भवे तथा आधुनिकलक्षणायां मानाभावात्।

प्रकृते विषयत्वपदं साध्यताख्यविषयतापरं, अन्यथा सुखादीच्छाविषये सुखत्वादा

त्वतिप्रसङ्गात्। इच्छायां स्वभिन्नत्वविशेषणानुपादाने स्वपदेन ईश्वरेच्छामुपादाय स्वसमानाधिकरणस्वात्मकेच्छानधीनस्वविषयत्वेन गौणप्रयोजने अतिप्रसङ्गः स्यात्। स्वभिन्नत्वोपादाने तु स्वपदेन ईश्वरेच्छाया उपादाने स्वभिन्नस्वसमानाधिकरणेच्छाया अप्रसिद्ध्या न क्षतिः। अत्र सुगमानुगमप्रणाली यथा इच्छाविशिष्टेच्छाविषयत्वं स्वतःप्रयोजनत्वं, वैशिष्ट्यञ्च स्वतादात्म्य—स्वभिन्नसमानाधिकरणेच्छाविशिष्टान्यत्वोभयसम्बन्धेन सम्बन्धघटकवैशिष्ट्यञ्च स्वप्रयोज्यत्वसम्बन्धेन। एतेन स्वत्वस्य अननुगतत्वेऽपि न क्षतिः।

नत्वित्यादिसन्दर्भस्य स्वभिन्नप्रयोजनाजनकत्वे सति प्रयोजनत्वमिति यथाश्रुतोऽर्थः। अत्र प्रयोजनांशे स्वभिन्नत्वविशेषणानुपादाने जन्यमात्रस्य कालोपाधित्वेन जन्यत्वावच्छिन्नं प्रति कालत्वेन कारणतामादाय जन्ये सुखादौ अव्याप्तिः स्यात्, तद्विशेषणोपादाने तु सत्यन्तभागस्य स्वाव्यवहितोत्तरत्वजन्यतानिरूपितजनकत्वाभाववत्त्वे सति इत्यर्थकत्वान्न क्षतिः।

परे तु योग्यविभुविशेषगुणानां स्वोत्तरवृत्तिविशेषगुणनाश्यत्वेन दुःखोत्तरोत्पन्नसुखस्य दुःखनाशरूपप्रयोजनजनकतया अव्याप्तिवारणाय स्वभिन्नेति दुःखध्वंसभिन्नार्थकम्। तथा च दुःखध्वंसभिन्नप्रयोजनाजनकत्वात् सुखस्य न स्वतःप्रयोजनत्वव्याघातः। जन्यत्वानवच्छिन्नजन्यतानिवेशाच्च न प्रागुक्तदोषोऽपि। नाशस्य जन्याभावरूपतया निरुक्तनिवेशेनैव द्वितीयदोषोऽपि शक्यनिरास इति तदभिप्रायकमेव स्वभिन्नपदमित्यप्याहुः। दुःखनाशस्यापि यथा प्रयोजनत्वं तथाग्रे वक्ष्यते।

अव्याप्तेरिति—विषयासत्त्वदशायां अतीतानागतशब्दादिविषयकश्रावणादिवारणाय विषयतासम्बन्धेन प्रत्यक्षं प्रति तादात्म्येन विषयस्य कारणताकल्पनाया आवश्यकत्वेन सुखसाक्षात्काररूपे प्रत्यक्षे सुखस्य जनकतया सत्यन्तदलविरहादिति। न च सत्यन्तदले तादात्म्यसम्बन्धानवच्छिन्नाया जनकताया निवेशे नोक्तदोष इति वाच्यं अवच्छेदकतासम्बन्धेन सुखे सुखसाक्षात्कारे च तादात्म्यसम्बन्धेन जनके शरीरे अतिव्याप्तेः, यदि च तत्र गौणप्रयोजनं प्रति तथाविधजनकत्वमस्त्येवेति नातिप्रसङ्गस्तदा गौरवादेव परित्याज्यं तदिति। सुखसाक्षात्कारस्य दुःखाभावस्य च साक्षात्कारो मणिकारोक्तरीत्या न प्रयोजनमेवेति तत्र अव्याप्तेरसम्भवात् सुखमात्रे अव्याप्तिः प्रदर्शितेति ध्येयम्।

**शिवरामटीकोपरि**—तदुपायाबाधे तदितरानुद्देशेन इत्यर्थः। शास्त्रार्थतद्बोधादेरुपायतया तत्र प्रवृत्तेः फलाभिसन्धानपूर्वकत्वनियमादिति भावः। असाधारणं धर्ममेवेत्यादि—प्रकारतया सुखत्वादिधर्ममेव विषयीकृत्येत्यर्थः। तदुक्तं "मिदुःखत्वे सुखे चेच्छा तज्ज्ञानादेव जायते।" इति विश्वनाथेन कारिकावल्याम्।

## তাৎপর্য্যবিবরণ

পূর্ব্বে যে প্রয়োজনের কথা বলা হইয়াছে, উহা দুই ভাগে বিভক্ত; স্বতঃপ্রয়োজন ও গৌণপ্রয়োজন। এই স্বতঃপ্রয়োজনকেই বিশ্বনাথন্যায়পঞ্চানন ন্যায়সূত্রবৃত্তিগ্রন্থে মুখ্যপ্রয়োজন নামে অভিহিত করিয়াছেন। তন্মধ্যে স্বতঃপ্রয়োজন তিনটী পদার্থকে বলা হয়, যথা—সুখ সুখসাক্ষাৎকার ও দুঃখাভাব। সুখসাক্ষাৎকার সকলের মতে প্রয়োজন নহে, কারণ লোক যখন কার্য্যে প্রবৃত্ত হয়, তখন ইহাতে আমার সুখ বা দুঃখাভাব হউক এইরূপ ইচ্ছা লইয়াই প্রবৃত্ত হয়, কিন্তু আমার সুখের সাক্ষাৎকার হউক এরূপ ইচ্ছা লইয়া নহে, অথচ যাহার ইচ্ছা হইতে প্রবৃত্তি উৎপন্ন হয়, উহাই প্রয়োজন সংজ্ঞায় অভিহিত, ইহাই শাস্ত্রের উপদেশ; অতএব স্বতঃপ্রয়োজনত দূরের কথা সুখসাক্ষাৎকার প্রয়োজনই হইতে পারে না। তত্ত্বচিন্তামণিকার গঙ্গেশোপাধ্যায় ঈশ্বরানুমানগ্রন্থে এই বিষয় পরিস্ফুটরূপে বিবৃত করিয়াছেন। কিন্তু গদাধরের নিজ মতে সুখের ইচ্ছা যেমন প্রবৃত্তির কারণ, ঐরূপ সুখসাক্ষাৎকারের ইচ্ছাও প্রবৃত্তির কারণ; অতএব সুখ ও দুঃখাভাবের ন্যায় সুখসাক্ষাৎকারও প্রয়োজন হইতে বাধা নাই। এই বিষয় শিষ্যগণকে বুঝাইবার জন্যই লক্ষণনির্ম্মাণের পূর্ব্বেই লক্ষ্যনির্দ্দেশ করা হইয়াছে।

যে বিষয়ের ইচ্ছা অন্যবিষয়ক ইচ্ছার অপেক্ষা না করিয়াই উৎপন্ন হয়, তাহাই স্বতঃপ্রয়োজন বা মুখ্যপ্রয়োজন। যেমন সুখ সুখসাক্ষাৎকার ও দুঃখাভাবের ইচ্ছা হইতে গেলে মূলে অন্য কোনও ইচ্ছার অপেক্ষা করে না, কিন্তু এতদ্‌ভিন্ন ভোজন শয়ন প্রভৃতির ইচ্ছা হইতে গেলেই মূলে সুখের ইচ্ছা বা দুঃখাভাবের ইচ্ছা কারণরূপে অপেক্ষা করিয়া থাকে, এই জন্যই শাস্ত্রে উপায়েচ্ছার প্রতি ফলবিষয়ক ইচ্ছাকে কারণ বলা হইয়াছে, কিন্তু ফলেচ্ছার প্রতি অন্য ইচ্ছাকে বিশেষ কারণ নির্দ্দিষ্ট করা

হয় নাই। তবেই দেখা যায়, যে সুখ দুঃখাভাব ও সুখসাক্ষাৎকারই স্বতঃপ্রয়োজন বা মুখ্যপ্রয়োজন; তদ্‌ভিন্ন ভোজন শয়ন প্রভৃতি গৌণপ্রয়োজন।

কেহ বলেন যে, যে বস্তু অপর কোনও প্রয়োজনের হেতু নহে, অথচ স্বয়ং প্রবৃত্তির হেতু ইচ্ছার বিষয়ীভূত, তাহাই স্বতঃপ্রয়োজন। উক্ত মত সমীচীন নহে, কারণ অতীত ও অনাগত শব্দাদিবিষয়ের শ্রাবণপ্রত্যক্ষাদি বারণের জন্য প্রত্যক্ষের প্রতি বিষয়কেও কারণ বলিয়া স্বীকার করিতে হয়, যে বস্তু বর্ত্তমান থাকিলে কার্য্য উৎপন্ন হয় এবং না থাকিলে কার্য্য উৎপন্ন হয় না ও অন্যথাসিদ্ধ নহে তাহাই কারণ, অতএব দেখা যায় যে বর্ত্তমান কালে অতীত বা অনাগত শব্দপ্রভৃতি বিষয়ের প্রত্যক্ষ হয় না, কিন্তু বর্ত্তমান শব্দপ্রভৃতি বিষয়েরই প্রত্যক্ষ হয়; অতএব শব্দাদিপ্রত্যক্ষে শব্দাদিরূপ বিষয়ও কারণ, এই নিয়মে সুখসাক্ষাৎকাররূপ প্রত্যক্ষজ্ঞানের প্রতি সুখরূপ বিষয়ের কারণতাহেতু সুখ প্রয়োজনান্তর সুখসাক্ষাৎকারের প্রতি জনক হয় বলিয়া সুখে উক্ত লক্ষণের অব্যাপ্তি দোষ হয়, অর্থাৎ সুখরূপ স্বতঃপ্রয়োজনে উক্ত লক্ষণ যাইতে পারে না। সুখসাক্ষাৎকারকে পূর্ব্বেই স্বমতে প্রয়োজন বলিয়া প্রতিপাদন করা হইয়াছে, অতএব এই ব্যাবৃত্তি অসঙ্গত হইবে না। এখন দেখা যায় যে স্বতঃপ্রয়োজনের পূর্ব্বোক্ত লক্ষণই সিদ্ধান্তসিদ্ধ।

---

## মূলম্

গৌণপ্রয়োজনন্তু অন্যেচ্ছাধীনেচ্ছাবিষয়ো ভোজনাদিঃ, তত্র সুখাদিরূপফলানুসন্ধানাদেব ইচ্ছোৎপত্তেঃ। দুঃখাসম্ভিন্ন-সুখরূপতয়া স্বর্গস্যৈব আন্বীক্ষিক্যাদিশাস্ত্রফলস্য অপবর্গস্য অত্যন্তদুঃখনিবৃত্তিরূপস্য স্বত এব প্রয়োজনত্বম্।

## शिवराम-टीका

ननु स्वतःप्रयोजनश्चेत् प्रवृत्त्युपयोगि, कथं तर्हि पाकादौ प्रवर्त्तत इत्यत आह गौणेति। तथाच स्वतःप्रयोजनसुखप्रयोजकतया तत्र प्रवृत्तिरुपपन्नैवेति भावः। एतदेव विवृणोति तत्रेति। ननु योगाभ्यासादितो यदि दुःखध्वंसमात्रं मुक्तिः स्यात्, स्यादेव तर्हि संसारिसाधारणीति योगाभ्यासादौ विशेषदर्शिप्रवृत्त्यभाव इत्यत आह दुःखासम्भिन्नेति। इदञ्च जीवन्मुक्तशास्त्रमर्थवादमात्रमिति मते, तस्य स्वार्थपरतामते तु दुःखासम्भिन्नत्वं सामान्यधर्म्ममादायैव उत्कटद्वेषविषयदुःखासम्भिन्ने दार्ष्टान्तिकता बोध्या। स्वत एव प्रयोजनत्वमित्यत्र विशेषदर्शिनामिति शेषः। नातो दृष्टान्तदार्ष्टान्तिकयोः स्वर्गापवर्गयोः सांसारिककेवलसुखदुःखध्वंसमात्रतो वैलक्षण्योक्त्यसङ्गतिरिति भाव्यम्।

## मुक्तिदीपिका

गौणप्रयोजनस्य स्वतःप्रयोजनेच्छाधीनतया प्रथमतः स्वतःप्रयोजनं निरूप्य किमन्यत् प्रयोजनमित्याकाङ्क्षायामिदानीं तदुपजीवकतया गौणप्रयोजनं निरूप्यते अन्येच्छाधीनेत्यादिना। अत्र लक्ष्यविशेषणमुद्रया लक्षणनिरुक्तिरिकोपक्रमेण लक्ष्यलक्षणोभयप्रदर्शनेनान्यलाघवाभिप्रायेण। तथाच अन्येच्छाधीनेच्छाविषयत्वं गौणप्रयोजनत्वम् इति लक्षणं, लक्ष्यञ्च भोजनादि। अन्येच्छापदेन ईश्वरेच्छामुपादाय तदधीनसुखादीच्छाविषये सुखादावतिप्रसङ्गभङ्गाय स्वसामानाधिकरण्यमत्रापि अन्येच्छायां विशेषणं बोध्यम्। अन्यपदं प्रागभावप्रतियोगिपरं ध्वंसप्रतियोगिपरं वेत्यपि केचिदाचक्षते।

इच्छायां अन्यत्वविशेषणानुपादाने जन्यमात्रस्य कालोपाधितया जन्यत्वावच्छिन्नं प्रति कालत्वेन कारणतायाः स्वसमानाधिकरणजन्येच्छायां सत्त्वेन तन्निरूपितकार्य्यताश्रयसुखेच्छाया विषये सुखे तथैवातिप्रसङ्गापातः। सिद्धान्ते तु अन्येच्छाधीनेत्यनेन स्वाव्यवहितेच्छानिष्ठकारणतानिरूपितकार्य्यतावत्त्वस्य विवक्षणान्न क्षतिः। कालत्वावच्छिन्नकारणतायाः अन्येच्छायामिव स्वस्मिन्नपि सत्त्वात्। अधीनत्वस्य समवायसम्बन्धावच्छिन्नत्व-

विवक्षायान्तु सामानाधिकरण्यमन्यत्वञ्च, लक्षणे अनुपादेयमेव, ईश्वरेच्छाधीनत्वस्य विषयितया कालाधीनत्वस्य च कालिकेन संसर्गेणावच्छिन्नत्वादिति। अत्रापि विषयत्व-पदेन साध्यताख्यविषयताविशेष एव विवक्षणीयः, इतरथा भोजनादीच्छाविषये भोजनत्वा-दावतिप्रसङ्गात्। तदत्र सुगमानुगमप्रणाली यथा—इच्छाविशिष्टेच्छाविषयत्वं गौणप्रयो-जनत्वं, वैशिष्ट्यञ्च स्वतादात्म्य—स्वविशिष्टेच्छाप्रयोज्यत्वोभयसम्बन्धेन, सम्बन्धघटक-वैशिष्ट्यञ्च स्वभिन्नत्वस्वसामानाधिकरण्योभयसम्बन्धेन। प्रयोज्यता च जन्यत्वानवच्छिन्ना ग्राह्येति न प्रागुक्तदोषशङ्कापि। तत्रेति भोजनादौ। सुखादिरूपफलानुसन्धानादेवेति— तथाहि उपायेच्छां प्रति फलेच्छायाः कारणत्वेन फलेच्छां विना उपायविषयिण्या इच्छाया उत्पादासम्भवादिति भावः।

दुःखासम्भिन्नेत्यादि—दुःखासम्भिन्नसुखरूपतयेत्यत्र दुःखासम्भिन्नेत्युपलक्षणम्, जगदीशादिनिरुक्तमनन्तरदुःखाग्रस्तत्वमभिलाषोपनीतत्वञ्च स्वर्गलक्षणघटकसुखे विशेषण-मवगन्तव्यम्, अन्यथा संसारिणोऽपि कादाचित्कदुःखासम्भिन्नसुखे अतिप्रसङ्गात्। स्वःपदस्य तादृशार्थे एव शक्तिः, शब्दशक्तिप्रकाशिकायां नामप्रकरणे वाक्यशेषप्रयुक्त-शक्तिग्रहोदाहरणप्रस्तावे जगदीशपादैस्तथैव प्रतिपादितत्वात्। तथाचायमर्थः—दुःखा-सम्भिन्नमनन्तरदुःखाग्रस्तमभिलाषोपनीतञ्च सुखं स्वर्ग इति। शब्दशक्तिप्रकाशिकाटीका-कारः कृष्णकान्तस्तु "यत् सुखं न दुःखेन सम्भिन्नं न च दुःखेन ग्रस्तं न च दुःखेनानन्तरं एवमभिलाषोपनीतं तत् सुखं स्वःपदप्रतिपाद्यमिति योजने"त्याह। तत्र पूर्व्वमते दुःखासम्भिन्नत्वं दुःखामिश्रितत्वं स्वसमानाधिकरणदुःखासमानकालीनत्वमिति यावत्। अनन्तरदुःखाग्रस्तत्वं स्वावच्छेदकीभूतशरीरावच्छेदेन स्वसमानाधिकरणदुःखोत्पत्ति-कालीनध्वंसाप्रतियोगित्वं। अभिलाषोपनीतत्वं कामनामात्रसमुपस्थितत्वं स्वेच्छामात्रा-धीनभोगविषयत्वं सामग्रीसम्पादनक्लेशं विनैव जायमानत्वमित्यर्थः। एतत्त्रयं मिलितं सत् स्वर्गलक्षणमित्यवधेयम्। स्वसमानाधिकरणस्य अभिलाषोपनीतस्य च यस्य सुखस्य अनन्तरं स्वर्गोत्पत्तिः पूर्व्वशरीरस्य ध्वंसेन तत्र न दुःखोत्पादस्तत्सुखे अतिप्रसङ्गभङ्गाय प्रथमदलम्। संसारिणामपि कादाचित्के अभिलाषोपनीतदुःखासम्भिन्नसुखे अति-प्रसङ्गभङ्गाय द्वितीयदलम्। आजन्ममुक्तानां शुककपिलादीनां नित्यसुखाभिव्यक्ति-मुक्तिरिति मते नित्यसुखे अतिव्याप्तिवारणाय तृतीयदलम्।

स्वर्गस्य क्षयितया स्वर्गरूपसुखावच्छेदकीभूतशरीरावसाने शरीरान्तरावच्छेदेन दुःखोत्पादस्य शास्त्रसिद्धतया असम्भवोऽव्याप्तिर्वेति द्वितीयदले स्वावच्छेदकीभूतशरीरावच्छेदेनेति विशेषणम्। सुखमात्रस्यैव आत्मान्तरवृत्तिदुःखसमानकालीनतया असम्भवभयेन प्रथमदले सामानाधिकरण्यनिवेशः। परशरीरप्रवेशकुशलानां योगिविशेषाणां अन्यदीयस्वर्गशरीरमाविश्यापि दुःखभोगस्वीकारे तच्छरीरावच्छिन्नसुखरूपस्वर्गे अव्याप्तिभिया द्वितीयदले सामानाधिकरण्यप्रवेशः। परकल्पे च तादृशपदव्यूहस्य दुःखासमानकालीनत्वे सति दुःखावच्छेदकीभूतशरीरानवच्छिन्नत्वे सति दुःखप्रागभावासमानकालीनत्वे सति अन्येच्छानधीनभोगविषयसुखार्थकतायां पर्यवसानात् अन्यथापि व्यावृत्तिरनुसन्धातव्या। तथाहि यादृशशरीरोत्पत्तिद्वितीयक्षणे सुखमुत्पन्नं तदनन्तरं तच्छरीरं नष्टं तादृशसुखातिव्याप्तिवारणाय प्रथमसत्यन्तम्। दुःखावच्छेदकखण्डशरीरविशेषावच्छिन्नचरमसुखे अतिव्याप्तिवारणाय द्वितीयसत्यन्तम्। एवमन्यत्राप्यनुसन्धेया। कदाचिच्चक्रवर्त्तिसुखस्य तथात्वसम्भवात् सुखमिति विशेष्यदलम्, तस्य च सुखवृत्तिवैजात्यावच्छिन्नपरतया तादृशवैजात्यस्य च चक्रवर्त्तिसुखे अनभ्युपगमेन नातिव्याप्तिः। तादृशवैजात्यञ्च अधर्माजन्यशरीरजन्यतावच्छेदकत्वादिना साधनीयम्। वैजात्यविशेषावच्छिन्नस्य सुखस्य स्वर्गरूपत्वे तादृशवैजात्यस्य वक्त्रन्तरे विरहेण तत्सुखमित्येतावन्मात्रस्यैव लक्षणवाक्यतासम्भवे पदान्तराणि तादृशवैजात्यग्राहकाणीति वदन्ति। अथवा यथोत्तरमुक्तविशेषणवाचकपदसमसंख्यकान्येव लक्षणानीत्यपि केषाञ्चन नव्यानामाशयः। तत्र पूर्व्वपूर्व्वकल्पेषु दोषस्फुरणादुत्तरकल्प एव निर्भरः। एवञ्च स्वर्गपदस्य शक्यार्थः सुखविशेष एव, स्थानपरतया पुराणादौ स्वर्गपदप्रयोगस्तु लाक्षणिक एवेति ध्येयम्। स्वर्गलक्षणेन "स्वल्पसङ्करः सपरिहारः सप्रत्यवमर्षः" इति पञ्चशिखाचार्य्यवचनस्य "तृष्यन्ति हि स्वर्गसुधामहाह्रदावगाहिनः कुशलाः पापमात्रोपपादितां दुःखवह्निकणिकाम्" इति वाचस्पतिवचनादेश्च विरोधस्तु दुःखे औत्कट्यविशेषणेन निवर्त्तनीय इत्याद्यूह्यम्।

आत्यन्तिकेत्यादि—अत्र आत्यन्तिकत्वं दुःखनिवृत्तौ विशेषणं, तच्च स्वसमानाधिकरणदुःखप्रागभावासमानकालीनत्वम्। तदिदमग्रे स्वयमेव सूचयिष्यते, उक्तञ्च मणिकारेण मुक्तिवादचिन्तामणौ "परमप्रयोजनमनुमानस्य अपवर्गः, आत्मा वा अरे

श्रोतव्य इत्यादि श्रुतेः। स च समानाधिकरणदुःखप्रागभावासहवृत्तिदुःखध्वंसः” इति। अत्र असहवृत्तित्वं असमानकालीनत्वम्। संसारिणामिदानीन्तनदुःखध्वंसातिव्याप्तिवारणाय तद्विशेषणम्। दुःखप्रागभावासमानकालीनदुःखध्वंसस्य तथात्वे प्रवाहनित्ये संसारे चिरमेव दुःखप्रागभावसत्त्वादसम्भववारणाय सामानाधिकरण्यम्। अन्यत् परतो व्यक्तीभविष्यति।

**शिवराम-टीकोपरि**—पाकादाविति—तस्य पाकादेः अन्येच्छाधीनेच्छाविषयत्वेन गौणप्रयोजनत्वादिति भावः। इदञ्च जीवन्मुक्तशास्त्रमित्यादि—अन्यथा प्रारब्धकर्मजन्यदुःखस्य जीवन्मुक्तिदशायां सत्त्वेन दार्ष्टान्तिकता न स्यादिति। वस्तुतस्तु तच्छास्त्रस্য स्वार्थपरतामतेऽपि स्वतःप्रयोजनत्वरूपसामान्यधर्म्ममादाय न दार्ष्टान्तिकत्वानुपपत्तिरिति।

## তাৎপর্য্যবিবরণ

পূর্ব্বে দেখান হইয়াছে, যে সুখ দুঃখাভাব ও সুখসাক্ষাৎকারের ইচ্ছা হইতে গেলে, মূলে উহা অপর কোনও ইচ্ছাকে অপেক্ষা করেনা; তদ্ভিন্ন যে কোনও বস্তু বিষয়ে জীবের ইচ্ছা হয়, তাহাতেই মূলে সুখাদির ইচ্ছা অপেক্ষা করে। যেমন আমরা যখন ক্ষুধায় কষ্ট পাইতে থাকি, অথবা তৃষ্ণায় একান্ত অস্থির হইয়া পড়ি, তখনই আমাদের মনে হইয়া ওঠে, যে এই ক্লেশের নিবৃত্তির উপায়ের সাহায্যে ক্ষুধা বা পিপাসার নিবৃত্তি হউক, এবং পরক্ষণেই যে বস্তুকে ঐ ক্ষুধা বা পিপাসার নিবৃত্তির উপযোগী বলিয়া ধারণা হয়, তদ্বিষয়ে ইচ্ছা উৎপন্ন হয়, এই জন্যই যে ব্যক্তির ক্ষুধার উপশম বা পিপাসার নিবৃত্তি বিষয়ে ইচ্ছা হয়, তাহারই ক্ষুধা উপশমের উপায় ভোজন বা পিপাসার নিবৃত্তির উপায় জলপানাদিবিষয়ে অভিলাষ জন্মে। কিন্তু যে ব্যক্তির ক্ষুধা উপশম বা পিপাসার নিবৃত্তি ইষ্ট নহে, তাহার কখনই তদুপায় ভোজনাদিতে ইচ্ছা হয় না। অতএব ভোজনাদির ইচ্ছা দুঃখনিবৃত্তি প্রভৃতি ফলেচ্ছার অধীন বলিয়া ভোজনাদি গৌণপ্রয়োজন।

“অশ্বমেধেন স্বর্গকামো যজেত” অর্থাৎ স্বর্গকামী ব্যক্তি অশ্বমেধ-

যাগ করিবে ইত্যাদি বিধিবাক্যের শাসনে স্বর্গকামনাপূর্ব্বক অশ্বমেধ যজ্ঞ অনুষ্ঠান করিয়া যাগকারী ব্যক্তি যে দুঃখসম্পর্কশূন্য কামনাজনিত স্বর্গলাভ করেন, দুঃখসম্পর্কশূন্য উহা যেমন স্বতঃপ্রয়োজন, গৌণ-প্রয়োজন নহে, সেইরূপ ন্যায়াদি দর্শনশাস্ত্রের ফলভূত অত্যন্তদুঃখ-নিবৃত্তিরূপ অপবর্গও স্বতঃপ্রয়োজন; কারণ নিরবচ্ছিন্ন সুখরূপ স্বর্গের নানাপ্রকারে উৎকর্ষ হেতু উহা উপাদেয় বলিয়া যেমন স্বর্গের ইচ্ছা অন্য কোনও ইচ্ছার অপেক্ষা রাখেনা, স্বর্গের উক্ত উৎকর্ষ জ্ঞানমাত্রেই তাহার প্রতি ইচ্ছা জন্মে, সেইরূপ আত্যন্তিকদুঃখনিবৃত্তি নানাপ্রকারে উৎকৃষ্ট বলিয়া শাস্ত্রাদির অধ্যয়নপূর্ব্বক তদ্বিষয়ে জ্ঞান লাভ করিলেই তদ্বিষয়ে ইচ্ছা উৎপন্ন হয়, আর কোনও ইচ্ছার অপেক্ষা করে না।

এস্থলে সংক্ষেপে স্বর্গের স্বরূপ বুঝিতে হইলে এই বুঝিতে হইবে যে,—যে সুখের সময়ে ঐ সুখের অধিকরণ আত্মায় কোনও উৎকট দুঃখ থাকে না এবং যে শরীরাবচ্ছেদে উক্ত সুখের উৎপত্তি হইতেছে সেই শরীরাবচ্ছেদে পূর্ব্বে বা পরেও সেই আত্মায় দুঃখ থাকে না, কামনা-জন্য উক্ত সুখবিশেষকেই স্বর্গ বলা হয়। নানাগ্রন্থে এইরূপ স্বর্গের লক্ষণ দেখিতে পাওয়া যায়, কোনও একটী স্থান অর্থে যে স্বর্গশব্দের প্রয়োগ হইয়া থাকে উহা স্বর্গশব্দের স্বাভাবিক অর্থ নহে, কিন্তু লাক্ষণিক। অপবর্গ বা মোক্ষের স্বরূপ সম্বন্ধে অতঃপর প্রসঙ্গক্রমে বিবরণ করা যাইবে। নরকাদি শব্দের অর্থও শাস্ত্রকারগণ ঐরূপে সুখপদের স্থানে দুঃখপদ ও দুঃখপদ স্থানে সুখপদ যোগ করিয়া অভিলাষোপনীত অংশ পরিত্যাগ করিয়া ব্যাখ্যা করিয়াছেন।

## मूलम्

मुक्तौ प्रमाणन्तु दुःखत्वं * देवदत्तदुःखत्वं वा स्वाश्रया-समानकालीनध्वंसप्रतियोगिवृत्ति कार्य्यमात्रवृत्तित्वात् सन्त-

तित्वाद्वा एतत्प्रदीपत्ववत् सन्ततित्वञ्च नानाकालीनकार्य्य-मात्रवृत्तित्वम्। "आत्मा ज्ञातव्यो, न स पुनरावर्त्तते" इति श्रुतिश्च प्रमाणम्। आवर्त्तते शरीरी भवति॥

## शिवराम-टीका

ननु प्रयोजनव्यवस्थापनं नाम तत्र युक्तिनिरूपणमित्यतस्तत्र मणिकारोक्तयुक्तिमाह मुक्तौ प्रमाणमिति। अत्र केचित् दुःखत्वं नैयायिकमात्रीयसङ्केतसम्बन्धेन दुःखपदवत्त्वं, तच्च वक्ष्यमाणैक-विंशतिविधं, न तु ईश्वरीयसङ्केतविषयतावच्छेदक—[दुःख] त्व-घटितं लाघवादिति वाच्यं, दुःखध्वंसवतः स्वर्गिणो मुक्तिपूर्व्वं मुक्तत्वा-पत्तेः। एतेन स्वाश्रयप्रागभावासमानकालीनेत्यादिकमपि परास्तम्, पूर्व्वोक्तमुक्तस्य तादृशदुःखप्रागभावाभावात् सदसत्सम्बन्धाभावादि-दोषेण तस्य दूषितत्वाच्च, अत एव सुखाभावनियतेत्यादि वक्ष्यमाणमपि सङ्गच्छते। एकजीववादिमते हिरण्यगर्भमुक्तिरेव मुक्तिरिति तन्मतसाधा-रण्यं लाघवञ्च अनुसृत्याह दुःखत्वञ्चेति। वस्तुत इदञ्चापाततः, पूर्व्वकल्प एव ज्यायान्, तथाच वाकारोऽनास्थायां एतत्कल्पस्य मणि-कारालिखनात्। नातो द्वितीयहेतुः स्वरूपासिद्धः, मणावपि तथैव पाठः इति बोध्यम्।

स्वं कार्य्यमात्रवृत्ति। साध्ये स्वाश्रयासमानकालीनत्वं ध्वंसे विशेषणम् साध्यतावच्छेदकमुद्रया मुक्तिसिद्ध्यर्थम्। कार्य्यमात्र-वृत्तित्वादिति कार्य्यान्यासमवेतत्वे सति कार्य्यसमवेतत्वादित्यर्थः। नित्यानित्यगुणसमवेतगुणत्वरूपत्वादिकमादाय स्वाश्रयनित्यगुणासमान-कालीनध्वंसाप्रसिद्धा साध्याप्रसिद्धिर्मा भूदिति सत्यन्तम्। प्रमेयत्वादिकमादाय तादृशदोषतादवस्थ्यमिति विशेष्यम्। पञ्चीभूत-

दुःखत्वे विषयतया नित्यज्ञानवृत्तित्वेनाप्रसिद्धिर्मा भूदिति सत्यन्तदले समवायनिवेशः। प्रमेयत्वमादाय साध्याप्रसिद्धितादवस्थ्यमिति विशेष्यदले समवायनिवेशः। अत्र खल्वस्य अननुगतत्वेन घटत्वादेर्निरुक्तकार्य्यमात्रवृत्तिश्रया स्वाश्रयासमानकालीनचरमघटध्वंसघटितसाध्यहेत्वोः सहचारप्रत्यक्षस्य जीवस्य असम्भवेन प्रोक्तानुमानं नावतरतीति चार्व्वाकशङ्कां परिहर्त्तुं तादृशसाध्यहेत्वोः सहचारप्रत्यक्षसम्पादकं गुरुतरमपि हेत्वन्तरमाह सन्ततित्वादेरिति। ननु सन्ततित्वं न जन्यपरम्परात्वं स्वरूपासिद्धेरत आह नानाकालीनेति, एककालीनानेकावृत्तित्वमत्र मात्रपदार्थः। तथाच बाल्यशरीरपरम्परावृत्तिः स एवायं चैत्र इति प्रत्यभिज्ञायमानचैत्रत्ववत् शिखापरम्परावृत्ति तथाविधैतत्प्रदीपत्वमपि जातिविशेषो दृष्टान्तो, नतु घटत्वादिरिति। उक्तञ्च '"सोऽयं दीपोऽर्चिषां यद्वत् स्रोतसां तदिदं जल" मित्यादीति। नन्विदमनुमानं नरशिरसि शौचानुमानवदागमबाधितमित्यत आह आत्मेति।

## मुक्तिदीपिका

प्रमाणतो ह्यर्थप्रतिपत्तिरिति न्यायेन प्रकृतापवर्गरूपार्थनिरूपणे प्रमाणमपेक्षणीयं, तच्च कतमदित्याकाङ्क्षायामनुमानं शब्दश्चेति प्रमाणद्वयीमवतारयति दुःखत्वमित्यादिना न स पुनरावर्त्तत इत्यन्तेन सन्दर्भेण। तत्र च एतत्प्रदीपत्ववदित्यन्तेनानुमानं, आत्मेत्यादिना न स पुनरावर्त्तत इत्यन्तेन च शब्दप्रमाणमुपक्षिप्तं।

अनुमानमार्गे तावदयमभिसन्धिर्यदा—आत्यन्तिकदुःखनिवृत्तिरपवर्ग इति प्रस्तुतम्, तस्मिंश्च साधयितव्ये यत्किञ्चिद्दुःखनिवृत्तावात्यन्तिकत्वं यदि शक्यसाधनं, तदेव तत्सिद्धिरप्रत्यूहा, सा च दुःखत्वादौ पक्षे तादृशवृत्तित्वरूपसाध्यसाधनेन फलतः सम्भवति, साध्यघटकविशेषणासिद्धौ विशिष्टसाध्यासिद्ध्या साध्याप्रसिद्धिदोषावतारप्रसङ्गात्। तथाच दुःखत्वादेः पक्षत्वकल्पे स्वपदेन तस्यैव उपादेयतया ध्वंसोऽपि

तित्वाद्वा एतत्प्रदीपत्ववत् । सन्ततित्वञ्च नानाकालीनकार्य्य-मात्रवृत्तित्वम् । "आत्मा ज्ञातव्या, न स पुनरावर्त्तते" इति श्रुतिश्च प्रमाणम् । आवर्त्तते शरीरी भवति॥

## शिवराम-टीका

ननु प्रयोजनव्यवस्थापनं नाम तत्र युक्तिनिरूपणमित्यतस्तत्र मणिकारोक्तयुक्तिमाह मुक्तौ प्रमाणमिति । अत्र केचित् दुःखत्वं नैयायिकमात्रीयसङ्केतसम्बन्धेन दुःखपदवत्त्वं, तच्च वक्ष्यमाणैक-विंशतिविधं, न तु ईश्वरीयसङ्केतविषयतावच्छेदक— [ दुःख ] त्व-घटितं लाघवादिति वाच्यं, दुःखध्वंसवतः स्वर्गिणो मुक्तिपूर्वं मुक्तत्वा-पत्तेः । एतेन स्वाश्रयप्रागभावासमानकालीनेत्यादिकमपि परास्तम्, पूर्व्वोक्तमुक्तस्य तादृशदुःखप्रागभावाभावात् सदसत्सम्बन्धाभावादि-दोषेण तस्य दूषितत्वाच्च, अत एव सुखाभावनियतेत्यादि वक्ष्यमाणमपि सङ्गच्छते।एकजीववादिमते हिरण्यगर्भमुक्तिरेव मुक्तिरिति तन्मतसाधा-रण्यं लाघवञ्च अनुसृत्याह दुःखत्वञ्चेति । वस्तुत इदञ्चापाततः, पूर्व्वकल्प एव ज्यायान्, तथाच वाकारोऽनास्थायां एतत्कल्पस्य मणि-कारालिखनात् । नातो द्वितीयहेतुः स्वरूपासिद्धः, मणावपि तथैव पाठः इति बोध्यम् ।

स्वं कार्य्यमात्रवृत्ति । साध्ये स्वाश्रयासमानकालीनत्वं ध्वंसे विशेषणम् साध्यतावच्छेदकमुद्रया मुक्तिसिद्ध्यर्थम् । कार्य्यमात्र-वृत्तित्वादिति कार्य्यान्यासमवेतत्वे सति कार्य्यसमवेतत्वादित्यर्थः । नित्यानित्यगुणसमवेतगुणत्वरूपत्वादिकमादाय स्वाश्रयनित्यगुणासमान-कालीनध्वंसाप्रसिद्धा साध्याप्रसिद्धिर्मा भूदिति सत्यन्तम् । प्रमेयत्वादिकमादाय तादृशदोषतादवस्थ्यमिति विशेष्यम् । पञ्चीभूत-

सन्ततुच्छेदे मूलोच्छेदस्य प्रयोजकत्वात्। प्रकृते च मिथ्याज्ञानस्य संसारमूलस्य श्रवणादिक्रमेणोत्पन्नतत्त्वज्ञानात् निवृत्तिः सम्भवत्येव।" इति।

**शिवराम-टीकोपरि**—तदत्यादि—निरुक्तसद्धेतसम्बन्धेन दुःखपदवदित्यर्थः। एकविंशतिविधमिति-षड् इन्द्रियाणि षड्विषयाः षड् बुद्धयः शरीरं सुखं दुःखञ्चेति। इदन्तु मतं प्राचीनानां, नतु नव्यानां ; तदुक्तं विश्वनाथेन न्यायसूत्रवृत्तौ "शरीरेन्द्रियार्थेषु दुःखसाधनत्वात् सुखे च दुःखानुषङ्गात् दुःखव्यवहारो गौण इति।" नरशिरसीत्यादि—अत्रायं प्रयोगः, यथा—'नरकपालं शुचि प्राण्यङ्गत्वात्' इत्यादिः। तद्बाधकागमो यथा—"मलमूत्रपुरीषास्थिनिर्गतं ह्यशुचि स्मृतम्। नारं स्पृष्ट्वा तु सस्नेहं सचैलो जलमाविशेत्।" इत्यादिः।

## তাৎপর্য্যবিবরণ

প্রমাণ হইতেই বস্তুর সিদ্ধি হয়, প্রমাণ ব্যতীত কোনও বস্তুর সিদ্ধি হয় না ; অতএব বস্তুর সিদ্ধি বিষয়ে অন্বয়ব্যতিরেকবশতই প্রমাণকে কারণ বলিয়া স্বীকার করিতে হয়। প্রমাণদ্বারা যে বস্তুর সত্তা প্রমাণিত হয় না, তাহা অলীক অর্থাৎ অসৎ। যেমন কোনও প্রমাণদ্বারা আকাশ কুসুম বা শশবিষাণাদি নামে কোনও বস্তুর সিদ্ধি হয় না বলিয়া উহা অলীক বা একান্ত অসৎ। অতএব মুক্তি বলিয়া একটী পদার্থ সিদ্ধ করিতে হইলে প্রমাণের আশ্রয় গ্রহণ করিতে হইবে, নৈয়ায়িক মতে যে প্রত্যক্ষ অনুমান উপমান ও শব্দ নামে চতুর্ব্বিধ প্রমাণ স্বীকার করা হইয়াছে, তন্মধ্যে মুক্তি প্রত্যক্ষপ্রমাণগম্য হইতে পারে না, কারণ বহিরিন্দ্রিয়ের যোগ্যরূপে যে সকল পদার্থ নিয়ত আছে, দুঃখের অত্যন্তনিবৃত্তিরূপ মুক্তি পদার্থ তদপেক্ষা অতিরিক্ত, এবং মুক্তির পরবর্ত্তী কালে জ্ঞানের সামান্য কারণ শরীর ও অদৃষ্ট প্রভৃতি না থাকায়, উহার মানস প্রত্যক্ষ পর্য্যন্ত অসম্ভব। মুক্তির পূর্ব্বকালে বিষয়ের অভাব হেতুই উহার প্রত্যক্ষ হইতে পারে না। এক আত্মার গুণ বা গুণের অভাব

বিষয়ে অন্য আত্মার প্রত্যক্ষ হইতে পারে না, অতএব প্রত্যক্ষপ্রমাণ দ্বারা মুক্তির সাধন করা একান্ত অসম্ভব। উপমান প্রমাণ দ্বারা শব্দের শক্তি-জ্ঞানই হইয়া থাকে, এই জন্য মুক্তি বিষয়ে সিদ্ধি করিতে হইলে অনুমান ও শব্দ প্রমাণই আশ্রয় করিতে হইবে। তন্মধ্যে প্রকৃত স্থলে অনুমান প্রমাণ এইরূপ, যথা—দৃশ্যমান কোনও প্রদীপে যে এতৎ-প্রদীপত্ব ধর্ম্ম আছে, উহাতে যেমন কেবল জন্যবস্তুবৃত্তিত্ব বা নানাকালীন কার্য্যমাত্রবৃত্তিত্বরূপ সন্ততিত্ব আছে এবং স্বাশ্রয়ের অসমানকালীন ধ্বংসের প্রতিযোগি এতৎপ্রদীপবৃত্তিত্ব আছে, ঐ দৃষ্টান্তে দুঃখত্ব বা দেবদত্তদুঃখত্ব কিম্বা সুখত্ব বা দেবদত্তসুখত্বরূপ ধর্ম্ম কেবল জন্য বস্তুতে থাকে ও নানাকালীন জন্য মাত্রে থাকে বলিয়া উহাও স্বাশ্রয়ের অসমান-কালীন ধ্বংসের প্রতিযোগী পদার্থে বর্ত্তমান হয়, ইহা সাধন করিতে পারা যায়। এককালীন একাতিরিক্ত জন্য বস্তুতে না থাকিয়া জন্য বস্তুতে থাকার নামই সন্ততিত্ব।

এস্থলে উক্ত অনুমান প্রদর্শনে গ্রন্থকারের আশয় এই যে, দুঃখত্ব বা দেবদত্তদুঃখত্বকে যদি স্বাশ্রয়ের অসমানকালীন ধ্বংসের প্রতিযোগীতে রাখিতে হয়, তবে ঐ ধ্বংস দুঃখ বা দেবদত্তদুঃখের ধ্বংসই ধরিতে হইবে; এবং ঐ ধ্বংসের এমন একটি কাল ধরিয়া লইতে হইবে, যে কালে স্বাশ্রয় দুঃখ পদার্থ একান্ত সত্তাশূন্য। মহাপ্রলয়ে কোনও জন্য ভাব বস্তু থাকে না বলিয়া মহাপ্রলয়কে ঐ কাল পদে ধরিলে অর্থান্তর বা অভিপ্রায়ের অসিদ্ধি হয় বটে, কিন্তু মহাপ্রলয় স্বীকারের বিশেষ কোনও যুক্তি না থাকায় উহা সিদ্ধ হয় না এবং মহাপ্রলয় স্বীকার করিলে উক্ত অনুমান প্রদর্শনের কোনই প্রয়োজন থাকে না। অতএব অতিরিক্ত আর এক সময়েও ঐরূপ অবস্থা স্বীকার করিতে হয়, সেই অবস্থাই মুক্তির অবস্থা। স্বাশ্রয় অর্থাৎ দুঃখত্বাদির আশ্রয় দুঃখাদি, উহার একান্ত উচ্ছেদ না

হইলে এই অনুমানের সামঞ্জস্য হয় না, অতএব ইহা দ্বারাই দুঃখের অত্যন্ত উচ্ছেদরূপ মুক্তির সিদ্ধি করা যায়।

এখন এস্থলে আশঙ্কা হইতে পারে যে, যেমন প্রাণ্যঙ্গত্ব হেতুদ্বারা নরকপালে শুচিত্বের অনুমান "মলমূত্রপুরীষাস্থিনির্গতং হ্যশুচি স্মৃতং" ইত্যাদি শাস্ত্র প্রমাণে বাধিত হয়, সেইরূপ এস্থলেও বাধক শাস্ত্র থাকিলে কিরূপে মুক্তির সিদ্ধি করা যায়, এই আশঙ্কা বারণের জন্য শাস্ত্রপ্রমাণও যে ইহার অনুকূল এই বিষয় শ্রুতি দ্বারা দেখান হইতেছে, যথা— 'আত্মার জ্ঞান অভীষ্ট মুক্তির সাধক এবং উহা কৃতিসাধ্য, কারণ যে ব্যক্তির আত্মসাক্ষাৎকার হয় তাহার আর সংসারে পুনরায় জন্মগ্রহণ করিতে হয় না'। মুক্তির একটি নাম অপুনর্ভব, অর্থাৎ পুনরায় জন্ম না হওয়া, যে পর্যান্ত জীবের মুক্তি হয় না, এ পর্যান্ত জন্মের নিবৃত্তি অসম্ভব, কর্ম্মফল ভোগ করিবার জন্য অবশ্যই জন্মগ্রহণ করিতে হইবে, কিন্তু আত্মসাক্ষাৎকারে যখন কর্ম্মোচ্ছেদ হয়, তখন আর জন্মের সম্ভাবনা থাকে না, কাজেই দুঃখেরও একান্ত উচ্ছেদ হইয়া থাকে।

## मूलम् ।

**नच अपवर्गस्य उक्तरूपस्य सुखविरोधितया न पुरुषार्थत्व-सम्भवः, सुखाभावनियतत्वेऽपि दुःखाभावत्वेन आत्यन्तिकत्वा-विशेषितेन तद्विशेषितेन च तदिच्छोत्पत्तौ वाधकाभावेन प्रयो-जनत्वोपपत्तेः। नच सुखाभावनियतत्वेन तत्र द्वेषसम्भवादिच्छा-सम्भव इति वाच्यम्, स्वतःप्रयोजनस्य द्वेषविषयत्वायोग्यत्वात्।**

### शिवराम-टीका

ननु प्रारब्धशरीरकर्म्मनाशोत्तरं चरमतत्त्वज्ञानाधीनात्यन्तिकदुःख निवृत्तेः सुखाधिकरणकालावृत्तित्वरूपसुखविरोधित्वेन तस्या द्वेष्यतया

कथं पुमर्थतेत्याशङ्कां मा भूत्। तेन रूपेण तत्र इच्छा दुःखाभावत्वेन तु स्यादेव तत्रेच्छेति समाधत्ते नचेत्यारभ्य उपपत्तेरित्यन्तेन।

ननु यस्य यत्र यदा दुःखे द्वेषः, तस्यैव तदा तदभावे तद्व्याप्ये च इच्छा, यस्य यत्र यदा सुखे इच्छा, तस्यैव तदा तदभावे तद्व्याप्ये च सुषुप्त्यादौ द्वेष इति नियमात् दुःखनिवृत्तेः कालिकसम्बन्धेन सुखाभावनियतत्वेन पुनर्द्वेष्यतैव स्यात्, नतु पुमर्थतेति। तथाचोक्तं "व्यसनानि दुरन्तानि समव्ययफलानि च। अशक्यानि च वस्तूनि नारभेत विचक्षणः।" इत्याशङ्का तथैव समाधत्ते नच सुखेत्यारभ्य अयोग्यत्वादित्यन्तेन। पूर्वं नचेत्यादिना इदं सुखविरोधीति ज्ञानस्य प्रतिबन्धकत्वादिच्छानुत्पाद-मापाद्य इदानीं द्वितीयनचेत्यादिना इदं सुखविरोधीति ज्ञानात् द्वेष आपाद्यते अतो न पौनरुक्त्यम्।

नच यत्प्रतियोगिनि कामस्तदभावे द्वेषसम्भवेऽपि तदभावव्याप्ये सुखाभावव्याप्यरूपे कथं द्वेष इति वाच्यं, यतो यथा यो हि यदा यदिच्छति, स तदा तद्व्याप्यमपीच्छति इत्यादि सर्वानुभवसिद्धम्। अत एव विपदोऽपि भगवद्दर्शनव्याप्यतया कुन्त्या प्रार्थिताः। तदुक्तं "विपदः सन्तु नस्तास्तास्तत्र तत्र जगद्गुरो! भवतो दर्शनं यत् स्यादपुन-र्भवदर्शनम्।" इति। तथा सुखाभावव्याप्येऽपि मूर्च्छादाविव प्रकृते द्वेषसम्भवादिति ध्येयम्।

## मुक्तिदीपिका

यदा हि लब्धपरमविज्ञानो योगी "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे।" इत्यादिश्रुत्यावेदितं कर्मक्षयादिक-मासादयति, तदा सुखजनकादृष्टविगमेन सुखानुत्पाद एव नियतः, अत एव अत्यन्त-दुःखनिवृत्तौ सुखाभावव्याप्यतापरपर्यायं सुखाभावनियतत्वमभिहितम्। तस्मादेव मणिकाराः "सकलोच्छेदे मोक्ष" इति प्राहुः।

दुःखाभावत्वेन दुःखाभावविषयिण्यामिच्छायां, नात्यन्तिकत्वस्योपयोगः, किन्तु
दुःखाभावत्वेन रूपेण दुःखाभावज्ञानस्यैव, दुःखाभावसुखविषयकेच्छयोः "निर्दुःखत्वे
सुखे चेच्छा तज्ज्ञानादेव जायते।" इत्यादिना विश्वनाथेन विषयज्ञानसाध्यत्वस्य व्यव-
स्थापनात्। आत्यन्तिकत्वस्य अधिकस्य तत्र सत्त्वेऽपि सामान्यधर्मप्रकारकज्ञानस्य
जनकविरहेण तद्विषयकेच्छासमुत्पादस्य सुसम्भवात्। विशेषधर्माणां सामान्यधर्म-
व्याप्यतत्वस्य सर्व्वसिद्धत्वात्।

बाधकाभावेनेति—इच्छां प्रति द्वेषसामग्र्या एव प्रतिबन्धकतया प्रकृते द्वेषसामग्री-
रूपप्रतिबन्धकविरहेण इच्छोत्पत्तिरशक्यपरीहारेति भावः।

प्रयोजनत्वोपपत्तेरिति प्रवृत्तिहेत्विच्छाविषयत्वोपपत्तेरित्यर्थः। इत्यञ्च अत्यन्तदुःख-
निवृत्तिरूपस्यापवर्गस्य पुरुषार्थता नापचीयत इति भावः।

तत्र द्वेषसम्भवादिति—तथाहि आदौ द्वेषसामग्र्यभावे द्वेषस्य आपादयितुमशक्यतया
तत्पूर्व्वं तत्सामग्रीरूपप्रतिबन्धकसत्त्वादिच्छायाः प्रसक्तिरेव प्रकृते न स्यादिति भावः।
तत इत्यादि—तथाहि विषयतया द्वेषं प्रति तादात्म्येन स्वतःप्रयोजनस्य प्रतिबन्धकत्वात्
प्रतिबन्धकाभावरूपकारणविरहेण द्वेषस्य असम्भवादिति भावः। अत्यन्तदुःखनिवृत्तेः
सुखाभावनियतत्वे श्रुतिरपि मानं, यथा—"अशरीरं वावसन्तं प्रियाप्रिये न स्पृशतः"।
इति। अवेदमवधेयं यथा—निखिलसुखानामेव दुःखानुविद्धतया सति सुखे
दुःखस्याप्यवश्यम्भावेन दुःखनिवृत्तेरात्यन्तिकत्वमेव तदानीं नोपपद्यते, अत एव सांख्य-
कारिकायामीश्वरकृष्णोऽपि "दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः। तद्विपरीतः
श्रेयान् व्यक्ताव्यक्तज्ञविज्ञानात्"। इत्यादौ स्वर्गरूपस्य निरतिशयसुखस्यापि दुःखानु-
बन्धरूपामविशुद्धिमुपपादयते। तत्र पञ्चशिखाचार्य्यवाचस्पतिमिश्रादीनामपि स
एवाभिप्रायः। अत एव मोक्षरूपाया दुःखनिवृत्तेरात्यन्तिकत्वमुपपादयितुं तत्र दुःखाना-
मिव सुखानामपि सुतरां निवृत्तिः कल्पयितव्येति केषाञ्चन हृदयम्।

**शिवरामटीकोपरि**—सुखाधिकरणकालावृत्तित्वेत्यस्य स्वसमानाधिकरण-
सुखाधिकरणकालावृत्तित्वेत्यर्थः। अन्यथा एकदा विश्वेषाम् आत्मनां मोक्षाभावेन
मोक्षे तादृशसुखविरोधित्वस्य अनुपपत्तेः। अत्र सामानाधिकरण्यं विशेषणतासमवाय-
घटितं, कालगतं सुखाधिकरणत्वञ्च कालिकघटितं ग्राह्यम्। तेन रूपेणेति—सुख-

সম্ভাবনা আছে, উহা স্বীকার করিতে গেলে অনুষঙ্গতঃ তৎকালে সুখ ও দুঃখের কারণ ধর্ম্ম ও অধর্ম্মরূপ অদৃষ্টেরও সত্তা স্বীকার করিয়া লইতে হইবে, অতএব তত্ত্বজ্ঞান বশতঃ যে দুরিতনাশ হইল, উহা স্বসমানকালীন দুরিতের অসমানকালীন হইতে পারিল না ; তবে উহাকে কিরূপে মোক্ষ বলিয়া স্বীকার করা যায়। ইহার উত্তর এই যে, তত্ত্বজ্ঞান উৎপন্ন হইলেও শরীরারম্ভক কর্ম্ম ভোগ বশতই নষ্ট হইবে এবং তদনন্তর উৎপন্ন অপর তত্ত্বজ্ঞান হইতে অপর দুরিতসমূহের নাশ হইবে, ঐ দুরিতনাশই আত্যন্তিক দুরিতনাশ, অতএব উহাই মোক্ষ, পূর্ব্বতত্ত্বজ্ঞানোত্তরজাত দুরিতনাশ নহে। চরম তত্ত্বজ্ঞানেই দুরিতনাশের অনুকূল বৈজাত্য স্বীকার করায় শরীরারম্ভক কর্ম্মসমূহের সত্তাবস্থায় তত্ত্বজ্ঞান দ্বারা ইতর কর্ম্মসমূহের নাশ হয় না।

কেহ বলেন যে, তত্ত্বজ্ঞান নিঃশেষরূপে দুরিত নাশ করে, কাজেই দুরিতনাশে স্বসমানাধিকরণ দুরিতের অসমানকালীনত্ব সিদ্ধ হয়, কিন্তু পুরুষান্তরীয় দুরিতের অসমানকালীনত্ববিশিষ্ট দুরিতনাশত্ব যেমন কাহারও জন্যতাবচ্ছেদক নহে, ঐরূপ স্বসমানাধিকরণ দুরিতের অসমানকালীনত্ববিশিষ্ট দুরিতনাশত্বও তত্ত্বজ্ঞানের জন্যতাবচ্ছেদক হয় না। এস্থলেও পূর্ব্ববৎ অর্থসমাজগ্রস্ততার আলোচনা করিতে হইবে। তত্ত্বজ্ঞান দ্বারা যে সকল দুরিত নষ্ট হয়, ঐ দুরিতসমূহে বিলক্ষণ একটী অনুগত জাতি স্বীকার করিয়া তদ্‌ঘটিত দুরিতনাশত্বকে জন্যতাবচ্ছেদক কল্পনা করিয়া উপপত্তির সম্ভাবনাও দেখা যায় না, কারণ গোবধ ব্রহ্মবধ প্রভৃতি কার্য্য যে দুরিত উৎপাদন করে, উহাতে যে গোবধাদিজন্যতাবচ্ছেদক জাতি আছে, তাহার সহিত উক্ত জাতির সাঙ্কর্য্য উপস্থিত হয়। কোনও জাতির সহিত যে ধর্ম্মের সাঙ্কর্য্য ঘটে, তাহা জাতি হইতে পারে না। পরস্পর অভাবের সামানাধিকরণ্য থাকিয়া পরস্পরের সামানাধিকরণ্য থাকিলে তাহাকে সাঙ্কর্য্য কহে। অতএব উক্ত পথও পরিত্যাগ

করিতে হইবে। ভোগাদি বশতঃ যে দুরিতনাশ ঘটে, উহাতেও দুরিত-নাশত্ব ধর্ম্ম থাকায় ব্যভিচার হয় বলিয়া সাধারণ দুরিতনাশত্বকে তত্ত্বজ্ঞানের জন্যতাবচ্ছেদক বলা একান্তই অসম্ভব। তবে তাদৃশ মুক্তির প্রতি কিরূপে তত্ত্বজ্ঞান হেতু হইতে পারে? উক্ত মতের উত্তরে এই বলা যাইবে যে ভোগাদি কারণ ব্যতিরেকেই তত্ত্বজ্ঞান দুরিতনাশ করিয়া থাকে, এই জন্য তত্ত্বজ্ঞানকে অবশ্যই দুরিতনাশের কারণ বলিতে হইবে, কিন্তু কেবল দুরিতনাশ অর্থাৎ অবিশেষিত সাধারণ দুরিতনাশের প্রতি উহাকে কারণ বলিলে পূর্ব্বোক্ত ব্যভিচার হয় বলিয়া অগত্যা আত্যন্তিকত্ববিশিষ্ট দুরিতনাশের প্রতিই তত্ত্বজ্ঞানকে কারণ বলিতে হয়। পুরুষান্তরীয় দুরিতের অসমানকালীন দুরিতনাশত্ব যে তত্ত্বজ্ঞানের জন্যতাবচ্ছেদক হয় না, তাহাতে প্রমাণাভাবই বাধক বলা যায়, অন্য কিছু নহে। এখন দেখা যায় যে, সাঙ্কর্য্যপ্রযুক্ত তত্ত্বজ্ঞাননাশ্য দুরিতে জাতি কল্পনা করিতে না পারিলেও কোন ক্ষতি হইল না।

---

## मूलम्।

अथ दुरितनाशेऽपि तत्त्वज्ञानस्य हेतुत्वमप्रामाणिकम्, भोगादेव सर्व्वत्र (१) अदृष्टनाशोपगमात्; अन्यथा 'नाऽभुक्तं चीयते कर्म्म' इत्यादिवचनविरोधः स्यात् (२)। न च तत्त्वज्ञानेन कर्म्मणोऽविनाशे तत्त्वज्ञानिनामात्यन्तिकदुःख-निवृत्तिः कथं स्यादिति वाच्यम्, प्राचीनकर्म्मणां भोगादेव चयेण

(१) सर्व्वादृष्ट (ख) (च) पुस्तकयोः। (२) विरोधात् (क) पुस्तके।

वासनाविरहेण च निषिद्धाचरणादिना अदृष्टान्तराजननात् दुःखानुत्पादेन कतिपयकालोत्तरं आत्यन्तिकदुःखविगम-सम्भवात्, अत एव तत्त्वज्ञानेन कर्म्मणामविनाशे दुःखस्याव-श्यकतया तत्त्वज्ञानोपाये प्रवृत्त्यनुपपत्तिरित्यपि समाहितम्।

न च 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्व्वसंशयाः। क्षीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परावरे (३)।" "ज्ञानाग्निः सर्व्वकर्म्माणि भस्मसात् कुरुते तथा।" (४) इति (५) बहुतरवाक्यबोधितं तत्त्वज्ञानस्य कर्म्मनाशकत्वं दुष्परिहर-(६)मेवेति वाच्यम्; माऽभुक्तमित्यादिवचनानुरोधेन (७) तत्त्वज्ञानं कायव्यूहसम्पादनद्वारा झटिति सकलकर्म्मभोगं निर्व्वाह्य तानि नाशयतीत्यत्रैव ज्ञानस्य कर्म्मनाशकताबोधक-वाक्यानां तात्पर्य्योपगमात्। यथा अग्नेरिन्धननाशे भस्मनि च परम्परयैव हेतुता, तथा ज्ञानस्यापि कर्म्मविनाशे इत्येतत्-सूचनायैव ज्ञानस्य अग्नित्वेन निरूपणम्।

न च माऽभुक्तमित्यादिवाक्ये कर्म्मपदं लक्षणयैव अदृष्टार्थक-मुपगन्तव्यम्, तस्य क्रियायामेव शक्तेरिति; लक्षणाया

---

(३) परात्परे (क) (ख) पुस्तकयोः।

(४) अर्ज्जुन (क) (ग) (ङ) पुस्तकेषु।

(५) यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्ज्जुन (क) (च) पुस्तकयोः अधिकम्।

(६) दुरपह्नव (क) (ख) (ग) (ङ) पुस्तकेषु।

(७) वचनाविरोधानुरोधेन (ख) (ग) (घ) (च)पुस्तकेषु।

आवश्यकत्वे ज्ञानाद्यनाश्यादृष्ट एव (८) साम्नु, तत एव विरोधभङ्गे किमर्थं तत्त्वज्ञानिनां सकलकर्म्मभोगकल्पनमिति वाच्यम्; अदृष्टेऽपि कर्म्मपदस्य अनादिप्रयोगप्रवाहदर्शनात् तत्र सामान्यरूपेण लक्षणायाः शक्तितुल्यत्वात्। कल्पना-लाघवानुरोधेन विशेषरूपेण स्वारसिकलक्षणाया (९) अयुक्त-त्वात्। न चैतन्मते कर्म्मणां भोगस्यावश्यकतया अभुक्तकर्म्मा-प्रसिद्धया तादृशवाक्यस्य यथाश्रुतार्थपरता (१०) न सम्भवतीति (११) वाच्यम् अतीतत्वस्य क्तप्रत्ययेन विवक्षणात् तत्क्षयापेक्षया अतीतो यो भोगस्तदनुपहितकर्म्मणि तत्क्षयप्रतियोगित्व-निषेधरूप-यथाश्रुतार्थे (१२) अप्रसिद्धग्रनवकाशात्।

यद्यपि भोगोऽनुभवविशेषः, तद्विषयत्वरूपं भुक्तत्वं न कुत्राप्य-दृष्टे (१३); तथापि भोगविषयफलोपधानमेव भोगकर्म्मत्वं प्रकृते विवक्षितम्; सुखं भुज्यते इतिवत् पुण्यं भुज्यते इत्यादि-प्रयोगदर्शनात् तादृशार्थस्यापि स्वरससिद्धत्वादिति चेन्न "कल्पकोटिशतैरपि" इत्युक्तेन यथा भावनाख्यः संस्कारः कालवशादपि फलमनुत्पाद्य (१४) नश्यति, तथा न कर्म्म

---

(८) लक्षणास्तु (क) पुस्तके। अस्तु (च) पुस्तके।

(९) अयोगात (क) पुस्तके। (१०) यथाश्रुतपरता (च) पुस्तके।

(११) सम्भवत्येवेति (क) (ङ) (च) पुस्तकेषु। (११) सङ्गच्छत इति (ख) पुस्तके।

(१२) यथाश्रुतार्थपरत्वे (ख) पुस्तके।

(१३) अदृष्टेऽसि (क) पुस्तके। (१४) फलमनुत्पाद्यापि (ख) पुस्तके।

इत्येव लभ्यते; तथा च ज्ञानादपि कर्म्मणो (१५) नाशे न कश्चिद् विरोधः; अन्यथा प्रायश्चित्तादपि कर्म्मनाशेन तादृश-वचनविरोधपरिहारासम्भवात् प्रायश्चित्तस्य पापानाशकत्वे तत्र प्रवृत्त्यनुपपत्तिः (१६)।

न च प्रायश्चित्तस्यापि कायव्यूहाधीन झटितिभोगसम्पादनद्वारा पापनाशकत्वमिति तत्र प्रवृत्तिरुपपद्यत (१७) एवेति वाच्यम्, दुःखव्यक्तीनां साम्ये झटिति भोगविलम्बभोगयोरविशेषेण प्रायश्चित्तानर्थक्यात्। एवञ्च "अवश्यमेव भोक्तव्य"-मित्यस्य अविरोधाय ज्ञानिनामपि सकलकर्म्मभोगोपगम इत्यपि (१८) न युक्तम्, कृतप्रायश्चित्तानां कर्म्मणां भोगाभावात् तत्र कर्म्मपदस्य वेदबोधितनाशकानाश्यकर्म्मपरताया आवश्यकत्वात् तत्त्वज्ञाननाशकस्यापि वेदबोधिततया तेन भोगं विनैव कर्म्मनाशे क्षतिविरहात्। तत्त्वज्ञानस्य साक्षाददृष्टनाशकत्वे क्वचिद् भोगः, क्वचिच्च तत्त्वज्ञानम् इत्यननुगमेन व्यभिचारात् भोगस्य अदृष्टनाशकारणता न सम्भवतीत्यपि नाशङ्कनीयम्; भोगापद्दिताऽदृष्टनाशत्वस्य भोगजन्यतावच्छेदकतया व्यभिचारानवकाशात्, अन्यथा तवापि प्रायश्चित्तकीर्त्तनादिजन्यादृष्टनाशे व्यभिचारात्।

---

(१५) नाशेऽपि—(क) पुस्तके।

(१६) प्रवृत्त्यनुपपत्तेः—(क) (ख) (ग) (ङ) पुस्तकेषु।

(१७) पद्यत इति—(क) पुस्तके। (१८) इत्यप्ययुक्तम् (ख) पुस्तके।

## शिवराम-टीका

ननु लाघवात्, सर्व्वेषां कर्म्मणां भोग एव नाशक इत्याशङ्कते अथेति। वासनाविरहिणेत्यस्मात् पूर्व्वं तत्त्वज्ञानादिति पूरणीयम्। कतिपयकालोत्तरं प्राचीनकर्म्मभोगोत्तरम्। अत एव भोगात् तत्त्वज्ञानाच्च दुःखोत्पादकादृष्टविरहादेवेत्यर्थः। कायव्यूहसम्पादनद्वारेति इदमापाततः, सौभरिप्रभृतेर्ज्ञानं विनापि तपोयोगादिप्रभावादेव कायावश्यसाध्यभोगसम्भवेन न ज्ञानस्य युगपत् कायव्यूहसम्पादनद्वारिता सम्भवतीति। न च सौभरिप्रभृतीनां योगजधर्म्मसत्त्वे तत्त्वज्ञानमावश्यकम्, योगजधर्म्मजनकश्रवणादितोऽपि तत्त्वज्ञानानुत्पत्तेः पुराणादिषु प्रसिद्धेः। किञ्च कल्पमन्वन्तरादिक्रमकालभोग्यनरकसन्तानजनककर्म्मणां कायारम्भेण झटिति भोगासम्भवश्चात्र बोध्यः। न च तावत्कालभाविनरकसन्तानसमसंख्यकजनकत्वं तत्तद्वाक्यार्थः यथाश्रुतार्थत्यागापत्तेः। ननु 'ज्ञानाग्निः सर्व्वकर्म्माणी'त्यादिना साचादेव कर्म्मनाशकत्वं ज्ञानस्योक्तम्, अतः कथं तादृशभोगस्य द्वारतोक्तिरित्यत आह यथा अग्नेरिति। निरूपणं भगवत इति शेषः। तथा च परम्परयैव नाशकत्वरूपसाधर्म्येण रूपकमेव तदिति भावः।

न सम्भवत्येवेति—तथा च ज्ञानाद्यनाश्यादृष्ट एव साक्षिति पक्षः पुनरापततीति भावः। तत्क्षयापेक्षया स्वाव्यवहितपूर्व्वत्वसम्बन्धेन भोगविशिष्टवर्त्तमानकर्म्मक्षयापेक्षया। तथा च अतीतभोगोपहितकर्म्मण एव वर्त्तमानक्षयप्रतियोगित्वम्, न तु भविष्यत्क्षयीयस्य वर्त्तमानभोगोपहितस्य अतीतभोगानुपहितस्य कर्म्मण इति भावः। माऽभुक्तमित्यादौ विशिष्टान्वयबलात् सिद्धान्तयितुस्तात्पर्य्यमाह कल्पकोटीति। तथा च फलानुपहितकर्म्मविनाशे कालजन्यत्वनिषेधे तात्पर्य्यात् क्वचित् तादृशविनाशे तत्त्वज्ञानजन्यत्वसत्त्वेऽपि न क्षतिरिति भावः। ननु तद्वाक्यस्य

भोगं विना कर्म्मणि नाशप्रतियोगित्वमित्येव यथाश्रुततात्पर्य्यं किं न स्यादित्यत आह अन्यथेति। इष्टापत्तौ बाधकमाह प्रायश्चित्तस्येति। आशङ्केत न चेति। अविशेषेण तारतम्याभावेन।

ननु तद्वाक्ये तादृशतात्पर्य्यं युक्तं कल्पकाटीत्यादिसत्त्वात् तथापि तद्धर्मकर्म्मनिन्दार्थवादं कल्पयित्वा अवश्यमेवेत्यादिवाक्ये तु तादृश-शब्दाभावेन तादृशतात्पर्य्याभावात् कर्म्ममात्रस्य भोगनाश्यत्व एव तात्पर्य्यमित्याशङ्का प्रायश्चित्ते प्रवृत्त्यन्यथानुपपत्त्या समाधातुमुपक्रमते एवञ्चेति, प्रायश्चित्ते प्रवृत्त्यन्यथानुपपत्तौ चेत्यर्थः। तत्त्वज्ञानभोगयो-र्मिथोऽदृष्टनाशे भोगैकनाश्यकर्म्मवादिनो व्यभिचाराशङ्कां कार्य्यता-वच्छेदकसङ्कोचेनोद्धरति तत्त्वज्ञानस्येति। प्रतिबन्दिमाह अन्यथेति। तव भोगमात्राधीनकर्म्मनाशाङ्गीकर्त्तुः।

## मुक्तिदीपिका

भोगादेवेति—तथा च कर्म्मत्वावच्छेदेन भोगनाश्यतया भोगेतरानाश्यतया वा अनुमानात् दुरितनाशे तत्त्वज्ञानस्य अनुप्रयोगः समापततीति। तथाचायं प्रयोगः—सर्व्वं कर्म्म भोगजन्यनाशप्रतियोगि कर्म्मत्वात् भुक्तभुज्यमानकर्म्मवत् इत्यादिः। अत्र पक्षैकदेशे हेतौ साध्यसहचारज्ञानसम्भवात् न दृष्टान्तासिद्धिः; व्यतिरेकेण वा दृष्टान्तः। सर्व्वस्यैव कर्म्मणः पक्षतया नापि सिद्धसाधनम्।

आत्यन्तिकदुःखनिवृत्तिः कथं स्यादिति—"दुःखेनात्यन्तं विमुक्तश्चरती"त्यादिश्रुत्या तत्त्वज्ञानिनामत्यन्तदुःखविमुक्तिश्रवणात् तत्र न विप्रतिपत्तिः, परं भवन्मते तत्त्वज्ञानोत्-पत्तेऽपि कर्म्मणः सत्त्वे न तत्कार्य्यदुःखादेरपोहितुमशक्यतया दुःखनिवृत्तेरात्यन्तिकत्वं न सङ्घटते, कारणसत्त्वे कार्य्यानुत्पादे च व्यभिचारः कारणताग्रहविरोधी, तदत्र अदृष्टे दुःखजनकताग्रह-विलोपप्रसङ्गेन तथात्वमङ्गीकर्त्तुमशक्यमेवेति भावः।

भिद्यत इत्यादि—हृदयग्रन्थिः देहादिषु आत्मत्वादिप्रकारकविपर्य्ययजनितः संस्कारः, भिद्यते एकान्ततो नश्यति स्वसमानाधिकरणतादृशसंस्कारप्रागभावासमानकालीनध्वंस-

प्रतियोगी भवतीत्यर्थः। तथाहि संस्कारं प्रति स्वजनकज्ञानविपरीतनिश्चयस्यापि नाशकतया परावरदर्शनजतत्त्वज्ञानेन विनाशिते संस्कारे तादृशात्मत्वादिप्रकारकविपर्य्ययस्य चासम्भवेन तद्धन्यसंस्कारस्यापि अनुत्पत्त्या तादृशसंस्कारस्य ऐकान्तिको ध्वंस इति निपुणमवसेयम्। पञ्चदश्यान्तु "न द्वेष्टि सम्प्रवृत्तानि न निवृत्तानि काङ्क्षति। उदासीनवदासीन इति ग्रन्थिभिदोच्यते"। (पञ्च—६।२६९) इति ग्रन्थिभेदस्वरूपमुपलभ्यते। 'कामा ग्रन्थिस्वरूपेण व्याख्याता वाक्यशेषतः' इति च तत्रैव। अथवा हृदयग्रन्थिः प्रवर्त्तनालक्षणरागद्वेषमोहात्मकदोषसमुदायः भिद्यते मिथ्याज्ञानापायात् अपैतीत्यर्थः। सर्व्वसंशया इति—अत्र सर्व्वपदेन संशयनाशे आत्यन्तिकत्वमायाति, अन्यथा तत्त्वज्ञानवति आत्मनि संशयस्य भविष्यदुत्पत्तिकाले तस्यैव नाशानुत्पादेन सर्व्वसंशयनाशविघटनादिति। अत्रापि तत्त्वज्ञानेन मिथ्याज्ञानवासनारूपदोषनाशात् दोषजन्यायथार्थज्ञानात्मकस्य संशयस्य असम्भव एव नियामक इति भावः। कर्म्माणीति बहुवचनेन तत्त्वज्ञानसमानकालीनसमानाधिकरणवृत्तिसकलकर्म्मचयः प्रत्याय्यते। अत्र सर्व्वत्र तस्मिन् परावरे दृष्टे सतीत्यन्वेति।

परम्परयैवेति—तथाहि आदौ अग्निना इन्धनावयवेषु अभिघातो जन्यते, ततस्तेषु क्रिया भवति, ततस्तया क्रियया अवयवानां विभागस्तस्मादिन्धनारम्भकसंयोगनाशः ततोऽवयविनाश इति क्रमः। तत्र अवयविनाशे मुख्यं कारणम् इन्धनारम्भकसंयोगनाश एव, नत्वग्निरिति। सामान्यरूपेणेति—अदृष्टत्वरूपसामान्यधर्म्मपुरस्कारेणेत्यर्थः, विशेषरूपेण ज्ञानाद्यनाश्यादृष्टत्वरूपविशेषधर्म्मपुरस्कारेणेत्यर्थः। क्रियायामेव शक्तेरिति—कर्म्मत्वस्य जातेः उत्क्षेपणादिक्रियावृत्तितया, तस्य च शक्यतावच्छेदकत्वे लाघवात् क्रिया एव कर्म्मपदमुख्यार्थ इति। अनादिप्रयोगेत्यादि—तथाहि "नाऽभुक्तं क्षीयते कर्म्म कल्पकोटिशतैरपि।" इत्यादौ, "न कर्म्मणाऽन्यधर्म्मत्वादतिप्रसक्तेश्च" इति सांख्यसूत्रादौ, 'क्षेपणाय भवजन्मकर्म्मणाम्' इति कुसुमाञ्जलौ, 'अनादाविह संसारे सञ्चिताः कर्म्मकोटयः' इति पञ्चदश्यादौ च भूयस्तदर्थे कर्म्मशब्दप्रयोगस्य दृष्टचरत्वादिति ध्येयम्।

**शिवराम-टीकोपरि**—कल्पमन्वन्तरेत्यादि—अत्रेदमवधेयं यत् अस्ति हि कालप्रतिनियमः कर्म्मजन्यादृष्टभोगस्य, अत एव आत्मनि युगपत् सतामपि अदृष्टानां न युगपदेव फलोत्पादः, तस्मात् कालविशेषरूपकारणविरहतो दुःसम्पाद एव झटिति

তথা ভোগ ইতি। ন চরিতিরিতি কালজন্যত্বাভাবেন তত্ত্বজ্ঞানজন্যত্বস্য অবিরোধাদিতি ভাবঃ। তদ্বাক্যস্যেতি "নাঽভুক্তং ক্ষীয়তে কর্ম্ম" ইত্যাদিবাক্যস্য ইত্যর্থঃ।

কায়ব্যূহেতি—অত্র "আত্মনো বৈ শরীরাণি বহূনি মনুজেশ্বর। প্রাপ্য যোগবলং কুর্য্যাত্ তৈশ্চ কৃত্স্নাং মহীং চরেত্। ভুঞ্জীত বিষয়ান্ কৈশ্চিত্ কৈশ্চিদুগ্রং তপশ্চরেৎ। সংহরেচ্চ পুনস্তানি সূর্য্যস্তেজোগণানিব।" ইতি ন্যায়সারাদিসন্দর্ভাঃ প্রমাণম্। জ্ঞানং বিনাপীতি—তদুক্তমীশ্বরানুমানে—"তপঃপ্রভাবাদেব তত্ত্বজ্ঞানানুত্পাদেঽপি কায়ব্যূহসম্ভবাত্" ইত্যাদি।

## তাৎপর্য্যবিবরণ

কেহ বলেন যে, দুরিতধ্বংসরূপ কার্য্যের প্রতিও তত্ত্বজ্ঞানের হেতুতা বিষয়ে কোনও প্রমাণ নাই; কারণ ভোগবশতই সর্ব্বত্র অদৃষ্টের নাশ হয়। ইহা স্বীকার না করিলে "নাঽভুক্তং ক্ষীয়তে কর্ম্ম" অর্থাৎ ভোগ না হইলে কর্ম্মের ক্ষয় হয় না এইরূপ শ্রুতির সহিত উহার বিরোধ ঘটে। যদি বলা যায় যে, তত্ত্বজ্ঞান দ্বারা কর্ম্মের বিনাশ না হইলে তত্ত্বজ্ঞানী ব্যক্তিগণের কর্ম্মপ্রযুক্ত দুঃখের অবশ্যম্ভাববশতঃ আত্যন্তিক দুঃখনিবৃত্তিরও অনুপপত্তি হয়, অতএব অত্যন্তদুঃখনিবৃত্তির মুক্তিত্বমতেও যখন উহা স্বীকার করিতে হয়, তখন এই মতে উহা স্বীকার করিতে বাধা কি? ইহার উত্তর এই যে, প্রাক্তন কর্ম্মসমূহের ভোগবশতঃ ক্ষয় হওয়ায় বাসনার অভাবহেতু নিষিদ্ধাচরণ প্রভৃতি দ্বারা অন্য অদৃষ্ট উৎপন্ন না হওয়ায় দুঃখের অনুৎপত্তি নিবন্ধন কিয়ৎকাল পরে আত্যন্তিক দুঃখনিবৃত্তির উপপত্তি হইতে পারে। এই সিদ্ধান্তে 'তত্ত্বজ্ঞান দ্বারা যদি কর্ম্মের বিনাশ না হয়, তবে দুঃখের অবশ্যম্ভাবিতা হেতু তত্ত্বজ্ঞানের উপায়ে অত্যন্ত দুঃখনিবৃত্তির উদ্দেশে প্রবৃত্তি অসম্ভব হয়,' এ আশঙ্কাও নিরস্ত হইল।

যদি বলা যায় যে, পরমাত্মার সাক্ষাৎকার হইলে তত্ত্বজ্ঞান দ্বারা দেহে আত্মসংস্কার প্রভৃতি নষ্ট হয়, সকল সংশয় উচ্ছিন্ন হইয়া যায় এবং সমস্ত

অদৃষ্ট নাশ প্রাপ্ত হয়।' এবং "প্রজ্বলিত অগ্নি যেমন কাষ্ঠগুলিকে দগ্ধ করিয়া ভস্মসাৎ করিয়া ফেলে, ঐরূপ জ্ঞানাগ্নি কর্ম্মসমূহকে সমূলে বিনষ্ট করিয়া ফেলে।" এই সকল অর্থে যে বহু শাস্ত্র আছে, উহা দ্বারা প্রতিপাদিত হয় যে, তত্ত্বজ্ঞান কর্ম্মের নাশক, অতএব উহা কোনও রূপে অস্বীকার করা যায় না। তাহার উত্তরে এই বলিতে পারা যায় যে, "মাঽভুক্তং ক্ষীয়তে কর্ম্ম" ইত্যাদি শাস্ত্রের সহিত বিরোধ খণ্ডন করিবার জন্য ইহাই স্বীকার করিতে হইবে যে, তত্ত্বজ্ঞান কায়ব্যূহ সম্পাদনপূর্ব্বক সত্বর সমস্ত কর্ম্মের ভোগ নির্ব্বাহ করিয়া উক্ত কর্ম্মসমূহ নষ্ট করিয়া থাকে, এই অর্থেই তত্ত্বজ্ঞানের কর্ম্মনাশকতা বোধক শ্রুতি প্রভৃতির তাৎপর্য্য। যেমন অগ্নি কাষ্ঠনাশ ও ভস্মের প্রতি কাষ্ঠাবয়বের অভিঘাতাদি দ্বারা পরম্পরায় কারণ, মুখ্য কারণ নহে, সেইরূপ কর্ম্মনাশের প্রতি তত্ত্বজ্ঞানও গৌণ কারণ, মুখ্য কারণ নহে। ইহা বুঝাইবার জন্যই জ্ঞানকে অগ্নি বলিয়া আরোপ করা হইয়াছে।

এস্থলে যদি বলা যায় যে "মাঽভুক্তম্" ইত্যাদি বাক্যে যে কর্ম্মশব্দ আছে, উহার অদৃষ্টরূপ অর্থ লক্ষণা দ্বারা স্বীকার করিতে হইবে, কারণ কর্ম্মশব্দের মুখ্য অর্থ ক্রিয়া, উক্ত অর্থে প্রকৃতস্থলে তাৎপর্য্যের উপপত্তি হইতে পারে না। অতএব যদি লক্ষণাই অবশ্য স্বীকার করিতে হইল, তবে তত্ত্বজ্ঞানাদি দ্বারা অনাশ্য অদৃষ্ট, অর্থাৎ যে সকল অদৃষ্ট তত্ত্বজ্ঞানাদি দ্বারা বিনষ্ট হয় না, তাদৃশ অদৃষ্ট অর্থেই উক্ত লক্ষণা স্বীকার করা যাউক, তাহাতেই পূর্ব্বোক্ত বিরোধ খণ্ডিত হইতে পারে, তবে আর তত্ত্বজ্ঞানী ব্যক্তির সকল কর্ম্মভোগ কল্পনার প্রয়োজন কি? তাহার উত্তর এই যে, অদৃষ্ট অর্থে কর্ম্মপদের প্রয়োগ অনাদিকাল হইতে চলিয়া আসিতেছে, অতএব সামান্য ধর্ম্ম অদৃষ্টত্বরূপে কর্ম্মপদের লক্ষণা শক্তিরই তুল্য, কিন্তু জ্ঞানাদিদ্বারায় অনাশ্য অদৃষ্টত্বরূপ বিশেষ ধর্ম্মরূপে আধুনিক লক্ষণা অত্যন্ত অন্যায্য। উহাতে কল্পনার লাঘব হইলেও উহা স্বীকার করা চলে না।

এস্থলে যদি এই বলা যায় যে, এই মতে সকল কর্ম্মেরই ভোগ স্বীকৃত বলিয়া অভুক্ত কর্ম্মই অপ্রসিদ্ধ, অতএব ঐ বাক্যের "অভুক্ত কর্ম্ম নাশ প্রাপ্ত হয় না" এইরূপ যথাশ্রুত অর্থে তাৎপর্য্য উপপন্ন হয় না, তাহার উত্তর এই যে "অভুক্তং" এইস্থলে যে ভুজ্ ধাতুর উত্তর ক্ত প্রত্যয় করা হইয়াছে, উহার অর্থ অতীতত্ব, অতএব কর্ম্মের ক্ষয়কাল অপেক্ষা পূর্ব্বকালে যে অবস্থায় কর্ম্মের ভোগ হয় নাই এইরূপ অবস্থায় কর্ম্মের ধ্বংসই নিষিদ্ধ হইয়াছে তাহাতে সামান্যরূপে অপ্রসিদ্ধি হইবার আর সম্ভাবনা নাই। যদিও ভোগ শব্দের অর্থ অনুভববিশেষ বা সাক্ষাৎকার এবং সেই অনুভবের বিষয়স্বরূপ ভুক্তত্ব কোনও অদৃষ্টেই সম্ভব হয় না, কারণ সকল অদৃষ্টই অতীন্দ্রিয়, তথাপি প্রকৃতস্থলে ভোগবিষয় সুখদুঃখাদিবিশিষ্ট অদৃষ্টকেই ভুক্ত এবং তদ্ভিন্ন অদৃষ্টকেই অভুক্ত বলা হইয়াছে। সুখ ভোগ করিতেছে এই প্রয়োগের ন্যায় পাপপুণ্য ভোগ করিতেছে এইরূপ প্রয়োগ যখন দেখিতে পাওয়া যায়, তখন ঐরূপ অর্থ অগত্যা স্বীকার করিতেই হইবে।

এখন মূল আপত্তির উত্তর এই যে, "শত শত কোটিকল্পেও ভোগ না হইলে কর্ম্মের নাশ হয় না" এই অর্থের বচন দ্বারা এইরূপ তাৎপর্য্যই প্রতীত হয় যে, যেমন ভাবনাখ্য সংস্কার ফল উৎপাদন না করিয়া কেবল কালক্রমে বা রোগাদিনিবন্ধনও বিনাশ প্রাপ্ত হয়, কর্ম্ম ঐরূপে ফল উৎপাদন না করিয়া কেবল কালক্রমে নষ্ট হয় না, তবে জ্ঞান হইতে কর্ম্মনাশস্বীকারেও কোন দোষ নাই। ঐরূপ তাৎপর্য্য স্বীকার না করিয়া সকল কর্ম্মেরই ভোগাধীন ক্ষয় স্বীকার করিলে প্রায়শ্চিত্তদ্বারা কর্ম্মনাশ স্বীকার করাও অসম্ভব হয়। প্রায়শ্চিত্ত পাপের নাশ করে না ইহা স্বীকার করিলে প্রায়শ্চিত্তের নিষ্ফলতা হেতু উহাতে প্রবৃত্তির উপপাদনও সম্ভব হয় না। যদি বলা যায় যে প্রায়শ্চিত্তও কায়ব্যূহ বা একদা বহু শরীর সম্পাদনপূর্ব্বক সত্বর ভোগ জন্মাইয়া কর্ম্মনাশ করে, অতএব উহার প্রতি প্রবৃত্তি হইতে

বাধা কি ? তাহার উত্তর এই যে, প্রতিকূলবেদনীয়রূপে সকল দুঃখই তুল্য বলিয়া কেবল সত্বর ভোগ বা বিলম্বে ভোগে কোনও বৈলক্ষণ্য না থাকায় প্রায়শ্চিত্ত করিবার প্রয়োজন হয় না। "কৃত শুভাশুভ কর্ম্মের অবশ্যই ভোগ করিতে হইবে" এই অর্থে "অবশ্যমেব ভোক্তব্যং কৃতং কর্ম্ম শুভাশুভং" এই সকল বচনের বিরোধ খণ্ডন করিবার জন্য তত্ত্বজ্ঞানী-দিগেরও সর্ব্বকর্ম্মের ভোগ স্বীকার্য্য, ইহাও সমীচীন নহে, কারণ যে সকল পাপের প্রায়শ্চিত্ত করা হয়, পূর্ব্বোক্ত হেতুবশতঃ ঐ পাপের ভোগ স্বীকার করিতে না পারায় কর্ম্মপদের অর্থ বেদবোধিতনাশক বস্তু দ্বারা যাহার নাশ হয় না, ঐরূপ কর্ম্মই ধরিতে হইবে, তত্ত্বজ্ঞানরূপ পদার্থও বেদবোধিত বলিয়া ভোগব্যতিরেকেও তাহা দ্বারা কর্ম্মনাশ স্বীকারে কোনও দোষ হয় না। তত্ত্বজ্ঞানকে সাক্ষাৎ অদৃষ্টের নাশক বলিলে কোনও স্থলে ভোগ কর্ম্মের নাশক এবং কোনও স্থলে তত্ত্বজ্ঞান কর্ম্মের নাশক হওয়ায় অননুগতরূপে কারণদ্বয় নির্ব্বাচনে ব্যভিচার ঘটে বলিয়া ভোগকে কোনওরূপে অদৃষ্টের নাশক কল্পনা করা যায় না, এ আশঙ্কাও কর্ত্তব্য নহে, কারণ ভোগবিশিষ্ট অদৃষ্টনাশের প্রতি ভোগকে এবং তত্ত্বজ্ঞানবিশিষ্ট অদৃষ্টনাশের প্রতি তত্ত্বজ্ঞানকে কারণ বলিলেই উক্ত ব্যভিচার বারণ করা যায়। ঐরূপ পথ অবলম্বন না করিলে পূর্ব্বপক্ষ-কারীর মতেও প্রায়শ্চিত্ত ও কীর্ত্তনাদিজন্য অদৃষ্টনাশে ব্যভিচার ঘটে, অতএব দুরিতনাশের প্রতি তত্ত্বজ্ঞানের বিশেষ কারণতা থাকায় তত্ত্ব-জ্ঞানজন্য দুরিতনাশকে মোক্ষ বলা যাইতে পারে।

---

## মূলম্

অথ দুরিতনাশস্য সুখ-দুঃখাভাবভিন্নতয়া (১) তদ্রূপস্য

---

(১) মোক্ষস্যেত্যধিকঃ পাঠঃ (খ) (গ) (ক) পুস্তকেষু।

कथं स्वतःप्रयोजनत्वमिति चेन्न कथञ्चित् स्वतःप्रयोजनत्वं (२) किन्तु दुःखाभावनिर्व्वाहकतया गौणप्रयोजनत्वमेव। अथैवं मिथ्याधीजन्यवासनाया अदृष्टद्वारा दुःखप्रयोजकतया तन्निवृत्तेरपि दुःखाभावनिर्व्वाहकतया पुरुषार्थत्वेन तस्या एव कुतो न मोक्षरूपता उपेयते (३) इति चेन्न उत्पन्नतत्त्वज्ञानानां वासनानिवृत्तावपि यावत् प्रारब्धशरीराणां कर्म्मणां नोच्छेदस्तावदपवर्गानभ्युपगमात्; "तावदेवास्य चिरं यावन्न विमोक्षः, अथ सम्पत्स्यते कैवल्येन" इति श्रुत्यापि प्रारब्धकर्म्मविमोक्षपर्य्यन्तं ज्ञानिनः कैवल्यविलम्बबोधनादित्याहुः।

## शिवराम-टीका

ननु अस्तु तादृशदुरितनाशो मोक्षः, तथापि तस्य स्वतःपुरुषार्थता नास्तीत्याशङ्का इष्टापत्त्या समाधत्ते अथेत्यादिना। शङ्कते अथैवमिति। एवं स्वतःप्रयोजनभिन्नेऽपि मोक्षरूपताङ्गीकारे। आहुरित्यस्वरसबीजं जीवन्मुक्तप्रकरणस्य स्वार्थतात्पर्य्याभावकल्पनादिकम्।

## मुक्ति-दीपिका

अथैवं तत्त्वज्ञानजन्यत्वेन दुरितनाशस्य मुक्तित्वम् इति स्थितं भवति, परन्तु तस्य स्वतःप्रयोजनताविरहेण तदुपपादनमशक्यं मुक्तित्वस्य स्वतःप्रयोजनतानियतत्वादित्यत आह अथेत्यादि। अथ नास्त्येव मुक्तित्वस्य स्वतःप्रयोजनतानियतत्वं, तस्य उभयविधप्रयोजनसाधारणत्वे क्षतिविरहादिति तत्र प्रतिबन्दिमाचष्टे अथैवमित्यादिना।

सुखदुःखाभावभिन्नतयेत्यादि—इदमुपलक्षणं, अन्यथा सुखसाक्षात्कारस्यापि आदौ

---

(२) (ख) (ग) पुस्तकयोः स्वतःप्रयोजनत्वम् इति नास्ति।

(३) स्वीक्रियते—(क) (ङ) पुस्तकयोः।

स्वतःप्रयोजनत्वस्य अभ्युपगमेन तत्रैव सुखदुःखाभावभिन्नत्वस्य हेतोः स्वतःप्रयोजनत्वाभाव-व्यभिचारितया तेन हेतुना दुरितनाशे स्वतःप्रयोजनत्वाभावस्य साधयितुमशक्यत्वात्। अथवा विवादस्थले प्रतिपक्षाभिमतहेतोरेव विशेषतः स्वपक्षसाधने समुपयोगात् मतान्तरे सुखसाक्षात्कारस्य स्वतःप्रयोजनत्वानभ्युपगमेन तथोक्तमिति ध्येयम्। कथञ्चिदित्यापातत इत्यर्थः।

अथैवमित्यादि—तथाहि यथा मिथ्याधीजन्यवासनानिवृत्तेः सत्यपि दुःखाभाव-निर्व्वाहकतया गौणपुरुषार्थत्वे नास्ति मोक्षरूपतायाः स्वीकारः, तथैव प्रकृते दुरितनाशे अपि तत्स्वीकारो न युक्तः, स्वतःप्रयोजनत्वस्य मुक्तित्वोपयुक्तस्य उभयत्रैव तुल्यरूपेण विरहस्य विद्यमानत्वादिति भावः। तावदेवेत्यादि—अस्य समुत्पन्नतत्त्वज्ञानस्य पुरुषस्य यावत् यत्कालपर्यन्तं न विमोक्षः प्रारब्धकर्म्मनाशः तावदेव तत्कालपर्य्यन्तमेव चिरं विलम्बः कैवल्यलाभे इति शेषः। अथ प्रारब्धकर्म्मनाशोत्तरं कैवल्येन अपवर्गेण सम्पत्स्यते सम्बद्धो भविता मुक्तो भविष्यतीत्यर्थः, समुत्पन्नतत्त्वज्ञानः स एव पुरुष इति शेषः। एतेन समुत्पन्नायामपि वासनानिवृत्तौ मुक्त्यर्थमवश्यमपेक्षणीयस्य कर्म्मविमोक्षस्य एव मुक्तित्वं युज्यते, नतु वासनानिवृत्तेरिति सारतो लाभः। आहुरित्यत्र गौणप्रयोजनस्य मुक्तित्वं नानुभविकं, तथा "तदत्यन्तविमोक्षोऽपवर्ग" इति न्यायसूत्रादिभिरस्य विरोधश्चेति अस्वरसबीजं चिन्तनीयम्। आहुरित्यस्य प्रागुक्तेन केचित्त्वित्यनेन सम्बन्धः।

**शिवराम-टीकोपरि**—एवं स्वत इत्यादि—तथाहि मोक्षत्वस्य स्वतःप्रयो-जनत्वव्याप्यत्वानङ्गीकारे स्वतःप्रयोजनत्वाभावेन हेतुना मिथ्याधीजन्यवासनानिवृत्तेः मोक्षत्वाभावस्य साधयितुमशक्यत्वादिति हृदयम्।

## তাৎপর্য্যবিবরণ

পূর্ব্ব সন্দর্ভে দুরিতনাশ তত্ত্বজ্ঞানজন্য এই হেতু উহা মুক্তির স্বরূপ বলিয়া বর্ণনা করা হইয়াছে, কিন্তু উহা সম্ভবপর নহে, কারণ স্বতঃপ্রয়োজন না হইলে তাহা মুক্তি পদার্থ হইতে পারে না, অতএব সুখাদিভিন্ন দুরিতনাশে

দুঃখাভাবের ইচ্ছা প্রযুক্তই ইচ্ছা জন্মে বলিয়া যখন অন্যেচ্ছার অনধীন ইচ্ছাবিষয়স্বরূপ স্বতঃপ্রয়োজনত্ব থাকে না, কিন্তু গৌণ প্রয়োজনত্বই থাকে; তখন উহাকে মুক্তি বলিয়া স্বীকার করা অসম্ভব। ইহার উত্তর এই যে, উহা কথঞ্চিৎ স্বতঃপ্রয়োজন, বস্তুগত্যা উহা গৌণপ্রয়োজনই হইবে। অতএব কথঞ্চিৎ স্বতঃপ্রয়োজনত্ব লইয়াই উহার মুক্তিত্ব স্বীকৃত হইয়াছে। এখন আপত্তি হইতেছে এই যে, যদি গৌণ প্রয়োজন হইয়াও দুরিতনাশ মুক্তিপদবাচ্য হইতে পারে, তবে যে মিথ্যাজ্ঞানজন্য বাসনা অদৃষ্ট দ্বারা দুঃখের প্রয়োজক হয়, তাহার নিবৃত্তিও দুঃখাভাবের নির্ব্বাহক বলিয়া তাহাকেও মোক্ষ বলিয়া স্বীকার করিতে পারা যায়; তাহার উত্তর এই যে, যাহার তত্ত্বজ্ঞান উৎপন্ন হইয়াছে, তাহার মিথ্যাজ্ঞানজন্য বাসনার নিবৃত্তি হইলেও যে পর্য্যন্ত প্রারব্ধ কর্ম্মরাশির ক্ষয় হইবে না, সে পর্য্যন্ত তাহার মুক্তি স্বীকার করা হয় নাই, উক্ত অর্থে "তাবদেবাস্য চিরং" ইত্যাদি শ্রুতিও প্রারব্ধ কর্ম্মের ক্ষয়কাল পর্য্যন্ত তত্ত্বজ্ঞানী ব্যক্তির মুক্তি বিষয়ে বিলম্ব প্রতিপাদন করে। তাহা হইলেই দেখা যায় যে, বাসনানাশ হইলেও যখন মুক্তি বিষয়ে কর্ম্মনাশের অবশ্যই অপেক্ষা করিতে হইতেছে, তখন অবশ্য অপেক্ষণীয় দুরিতনাশকে মুক্তি বলিয়া স্বীকার করাই যুক্তিসিদ্ধ, বাসনানাশকে মুক্তি বলিয়া স্বীকার করা যুক্তি-সিদ্ধ নহে।

---

## মূলম্

একদণ্ডিনো বেদান্তিনস্তু যদুপাধ্যনবচ্ছিন্নস্য ব্রহ্মণো বিশুদ্ধরূপতা তাদৃশোপাধিবিগম এব কৈবল্যম্; তাদৃশো-

पाधिरविद्यैव इति तन्निवृत्तिरेव तत्। दुःखस्य अन्तःकरण-विशेषबुद्धिधर्म्मतया तस्याश्च स्वजनकाविद्यानाशनाश्यतया अविद्यानिवृत्तेः स्वतःप्रयोजनत्वविरहेऽपि दुःखनिवृत्ति-निदानतया (१) गौणप्रयोजनत्वं दुरपवादमेव। अविद्या च पदार्थान्तरं अजन्यमपि विनाशप्रतियोगि, तन्नाशकञ्च ब्रह्म-संवेदनम्। न च अविद्यारूपावरणसत्त्वे ब्रह्मसंवेदनमेव दुर्घटमिति वाच्यं, ब्रह्मसंवेदनं हि ब्रह्माकारान्तःकरणवृत्तिः, (२) वृत्त्याख्योऽन्तःकरणपरिणाम एव विषयावरणभूताविद्या-निवृत्तिफलकः। तदुक्तं "बुद्धिवृत्तिचिदाभासौ (३) द्वावपि व्याप्नुतो घटम्। तत्राज्ञानं धिया नश्येदाभासात्तु घटः स्फुरेत्"। (पञ्च—७।९१) एवञ्च अविद्याया अन्तःकरणवृत्तौ न विरोधिता, अपितु विषयस्फूर्त्तावेव। स्फूर्त्तिश्च प्रकटता, सा च भट्टानामिव पदार्थान्तरमेवेति।

न च ब्रह्मणोऽन्तःकरणवृत्तिविषयत्वे ब्रह्मणः स्वप्रकाश-चैतन्यरूपतासिद्धान्तविरोधः, स्वेनैव प्रकाशाऽवगाहनं यस्येति व्युत्पत्त्या स्वमात्रविषयस्यैव स्वप्रकाशशब्दार्थत्वादिति वाच्यम्, यस्य स्वत एव स्फूर्त्तिस्तस्यैव स्वप्रकाशत्वात्। जड़ात्मकस्य प्रपञ्चस्य स्फूर्त्तिर्न स्वत एव, किन्तु फलात्, वृत्ति-

---

(१) (क) (ख) (ग) (ङ) पुस्तकेषु गौणेति नास्ति।

(२) (ख) पुस्तके वृत्तिश्चेत्यधिकपाठः।

(३) पुस्तके द्वावेव इति (क) पुस्तके द्वावति इति पाठभेदः।

व्याप्ये विषये चित्प्रतिबिम्ब एव पारिभाषिकं फलम् ; तदुक्तं "मोहातीतो विशुद्धो मुनिभिरभिहितो मोहसंक्रान्तमूर्त्तिः, साक्षी स्वान्ते तदुत्थे प्रतिफलितवपुर्गीयतेऽसौ प्रमाता । वृत्त्यारूढः प्रमाणं फलमपि विषयावृत्तिसंव्याप्तचैत्यापाधिर्मोहोत्थशब्दप्रमुखविषयगः स्यात् प्रमेयः परोक्षा" । इति । ब्रह्मणश्च स्फूर्त्तिः स्वत एव, नतु चिदाभासात् चैतन्यवस्तुनि चैतन्यप्रतिबिम्वासम्भवात् । एतेन ब्रह्मसंवेदनं ब्रह्मज्ञानं, एवञ्च स्वविषयज्ञानरूपं ब्रह्मैव तथेति नित्यतया संसारदशायामपि तत्सत्त्वेनाविद्यानिवृत्तिप्रसङ्ग (४) इति परास्तम्, अन्तःकरणवृत्तिरूपब्रह्मसंवेदनस्यैव अविद्यानिवर्त्तकतया ब्रह्माकारवृत्तेः संसारदशायामसत्त्वेन अविद्यानिवृत्तिप्रसङ्गाप्रसक्तेः ।

## शिवराम-टीका

जीवन्मुक्तप्रकरणस्य स्वार्थपरत्वमभ्युपगच्छतां वेदान्तिनां मतमाह एकदण्डिन इति । शिखासूत्राणां युक्तत्वायुक्तत्वाभ्याम् एकदण्डिविदण्डिनोर्लौकिको भेदो बोध्यः । ब्रह्मणः आत्मनः । विशुद्धरूपता रागाद्यशुद्धिरहितता । एतेन विशुद्धरूपता निर्धर्मकरूपतैव ब्रह्मरूपता इत्यतः पौनरुक्त्येन शाब्दबोधानुपपत्तिरिति प्रत्याख्यातं बोध्यम् कैवल्यमिति—यद्यपि जीवन्मुक्तस्य देहतद्धर्मसत्त्वे कैवल्यं दुर्घटं तथापि आत्मभिन्नं सर्व्वमध्यासितमित्यतोऽध्यासमूलीभूताविद्यानाशेनायं गौर इत्यादि-बहुलोकप्रतीतिसत्त्वेऽपि जीवन्मुक्तस्य दृष्ट्या वाधितानुवृत्त्या न

---

(४) इत्यपि—(क) (ख) (ग) पुस्तकेषु ।

(५) अतिप्रसङ्गाप्रसक्तेः (च) पुस्तके ।

किञ्चित् प्रतीतं यथेश्वरस्य चक्षुरादिकमिति दृष्टसृष्टिवादमनुसृत्य इदमुक्तमिति बोध्यम्। अत्र "कार्य्योपाधिरयं जीवः कारणोपाधिरीश्वरः"। इति प्रमाणादापातितो यदन्तःकरणमुपाधिस्तद्विनाश एव कैवल्यमित्याशङ्कां निरसितुं प्रतिसुषुप्तं अन्तःकरणभेदेन एकस्यैव जीवस्य नानात्वापत्त्यादिभिया "अविद्यास्तमयो मोक्षः सा च बन्ध उदाहृतः" इत्यादिचरमप्रमाणेन च अविद्याया विनाश एव कैवल्यमित्याह तादृशश्चेति। उपाधिरिति—उप समीपवर्त्तिनि स्वाधिष्ठानचैतन्ये स्वीयं परप्रकाश्यत्वादिकं धर्म्ममारोपयतीति स्फटिके जवाकुसुमवद् बोध्यम्। तत् कैवल्यम्।

ननु अविद्याविनाशस्य सुखदुःखाभावान्यत्वेन स्वतःप्रयोजनत्वं दुर्घटमित्याशङ्कां परिहरन्नाह दुःखस्येति। यद्यपि बुद्ध्यादिगुणानामात्मधर्म्मत्वं नैयायिकाभिमतं, तथापि "कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्व्वं मनः"। इति श्रुततस्तेषां मनोधर्म्मत्वं सिद्धमिति। ननु अविद्या विद्यात्यन्ताभाव एव, तस्य च नित्यतया नाशाभावात् कथं तन्नाशो मोक्ष इति चेन्मैवं अज्ञमत्र इति प्रत्यक्षविषयो ज्ञानसामान्याभावो वा ज्ञानविशेषाभावो वा? आद्ये अभावलौकिकप्रत्यक्षकारणगवेषणया सिद्ध्यसिद्धिपराहतत्वम्, द्वितीये अनुल्लिखितत्वमित्यत आह अविद्या चेति। पदार्थान्तरं बाधप्रतीत्यन्यथानुपपत्तिभ्यां सदसद्विलक्षणां अबाधितत्वरूपसत्त्वाभाववत्त्वे सति सत्त्वेन प्रतीयमानत्वमिति यावत्। नातश्चैकनिषेधेनापरविधित्वेनाप्रसिद्धिरिति बोध्यम्।

"जीव ईशो विशुद्धा चिद्विभेदस्तु तयोर्द्वयोः। अविद्या तच्चितोर्योगः षडस्माकमनादयः"। इति। "तरति शोकमात्मवित्" इति च प्रमाणाभ्यां अविद्याया नैयायिकाभिमतप्रागभावसाम्यमाह अजन्यमपीति। वस्तुतस्तु सदसत्सम्बन्धाभावात् प्रागभावस्य सतस्तदानी-

मसतः प्रतियोगिनः सम्बन्धाभावात् प्रतियोगिप्रागभावस्य अलीकत्व-मसम्मतं इति प्रागभावो न दृष्टान्तित इति द्रष्टव्यम्।

ननु अस्तु पदार्थान्तरमविद्या, तथापि तस्या नैयायिकाभिमत-घटादिपदार्थवत् ज्ञाननाश्यत्वमनुपपन्नमिति चेन्न तस्याः पदार्थत्वे अधास्त-तया मिथ्यात्वेन शुक्तिरजतवत् ज्ञाननाश्यत्वं सूपपन्नम्। मिथ्यात्वञ्च अनवच्छिन्नवृत्तिकस्वसमानाधिकरणाभावप्रतियोगित्वम्, नातोऽलीका-वैलक्षण्यम्। अलीकत्वन्तु सत्त्वेन प्रतीत्ययोग्यत्वं कालासम्बन्धित्वन्वं त्वा-दिकं हृदि निधायाह तन्नाशकञ्चेति। ब्रह्मसंवेदनं ब्रह्माकारा वृत्तिः। ननु तद्वत्तातदभाववत्ताज्ञानयोरिव अविद्यारूपावरणसंवेदनयोः समान-विषयकत्वेन मिथो विरोधित्वमित्याशङ्कते न चेति। अत्र विरोधित्वं न कारणीभूताभावप्रतियोगित्वम्, न वा मिथोऽनुत्पादनियामकत्वम्, आवरणस्य अनादित्वात्, अपि तु प्रतियोगिप्रागभावयोरिव समान-विषयकतया अविद्यावरणत्वेन नाश्यत्वं वृत्तित्वेन विनाशकत्वम्। आवरणशक्तौ प्रागुक्तविरोधित्वप्रवादस्तु स्फूर्त्तिमादायैव इत्याशयेन समाधत्ते ब्रह्मसंवेदनं चेति। वृत्तिरित्यतः परं न तु स्फूर्त्तिरिति शेषः। तथाच आवरणे स्थितेऽपि वृत्तिः, तया चावरणनाशः, ततः स्फूर्त्तिरिति क्षणचतुष्टयम्। तत्र तृतीयक्षणे न स्फूर्त्त्यापत्तिः द्वितीयक्षणे विनश्य-दवस्थावरणस्य प्रतिबन्धात्। परिणाम एव कार्य्ये एव। तथाच यथा तड़ागोदकं कुल्याद्वारा केदारान् प्रविश्य तत्तदाकारं भजते, तथा अन्तःकरणं तैजसं दीपप्रभावत् चक्षुरादिच्छिद्रद्वारा बहिर्विषयान् गत्वेति भावः। तथाचोक्तं "व्यञ्जको वा यथालोको व्यङ्ग्यस्याकारता-मियात्। सर्व्वार्थव्यञ्जकत्वाद्धीरर्थाकारा प्रदृश्यते।" (पञ्च—४।२८) "मातुर्मानाभिनिष्पत्तिनिष्पन्नं मेयमेति तत्। मेयाभिसङ्गतं तच्च मेयाभत्वं प्रपद्यते।" (पञ्च—४।३०) इति।

निवृत्तिफलकः अज्ञाननिवृत्तिद्वारा चिदाभासात् स्फूर्त्तिफलकः।

अत्र सुरेश्वराचार्य्यसम्मतिमाह तदुक्तमिति। वृद्धिवृत्तिरन्तःकरण-परिणामः। चिदाभासस्तु तत्र प्रतिविम्बितचैतन्यम्। द्वावेव तौ द्वौ घटं विषयं, व्याप्नुतः सम्बध्नीतः संयोगतादात्म्याभ्यामिति शेषः। अनयोर्विषयसम्बन्धे क्रमशः फले आह तत्रेति। अज्ञानं आवरणं, नास्ति न भातीति व्यवहारापादकं अस्ति भातीति व्यवहारविरोधि वेति यावत्। धिया वृद्धिवृत्त्या। ज्ञानाज्ञानयोः समानविषयकत्वेन नाश्य-नाशकभावादिति भावः। आभासात् वृत्तिप्रतिविम्बितचिदाभासात् घटः स्फुरेत् अनावृतचिदभिन्नो भवेत्, ततश्च स्फुरतीति व्यवहृतो भवेत्। अन्तःकरणवृत्तौ सत्यामावरणनाशे सति स्फूर्त्त्यभिव्यक्त्या घटः स्फुरतीति व्यवहार इति भावः। न विरोधिता न कारणीभूताभावप्रतियोगित्वम्। यद्यपि स्फूर्त्तिः ब्रह्मैव, तच्च अतीन्द्रियं स्वप्रकाशश्चेति कथं घटः स्फुरतीति व्यवहारः, तथापि वायोरिव अनतीन्द्रियोपहितस्य तस्यापि प्रत्यक्षत्वेन तथा व्यवहारोऽव्याहत एवेति बोध्यम्। अथवा एतदस्वरसादेवाह पदार्थान्तरमेवेतीति। गुरुमतानुसारिणाशङ्कते न चेति। स्वतः, नतु ज्ञानादिति शेषः। स्फूर्त्तिः अनावृतप्रत्यक्षचित्, यतः स्फुरतीति व्यवहारः। यथा द्रव्यलौकिकचाक्षुषे आलोकः संयोगेन हेतुः, हेतुश्च आलोकरूप-द्रव्यलौकिकचाक्षुषे [ तादात्म्येन ] आलोकाविषयद्रव्यलौकिकचाक्षुषस्य अलीकत्वात् (?) तथा घटादिव्यवहारे तद्विषयकज्ञानं हेतुः, हेतुश्च ब्रह्म-व्यवहारे ब्रह्मैव। सम्बन्धता तु तादात्म्येनैवेति। पूर्व्ववदिति विशेष-मभिप्रेत्याह जड़ात्मकस्येति। फलादिति—ननु एतन्मते अविद्यानिवृत्त्युप-लक्षितात्मन एव फलत्वात् प्रागुक्तविशेषो दुर्घट इत्यत आह व्याप्त्याप्येति वृत्तिसंयुक्तेत्यर्थः। अस्वच्छस्यापि स्वच्छद्रव्यसंयोगे जलसंयुक्तघटस्येव प्रतिविम्बग्राहित्वमिति भावः। तत्र संक्षेपशारीरकाचार्य्यसम्मतिमाह तदुक्तमिति। अत्र सर्व्वत्र परमात्मेति विशेष्यम्। मोहातीतोऽज्ञान-शून्यश्चेत् विशुद्धः शुद्धचैतन्यं अभिहितः कथितः। मोहे अज्ञाने संक्रान्त-

मूर्त्तिः प्रतिविम्बितश्चेत् साक्षी सर्व्वप्रपञ्चभासकः। तद्दृश्ये मोहजन्ये प्रतिविम्बितश्चेत् परमात्मैव प्रमाता गीयते। वृत्त्यारूढ़ोऽन्तःकरणपरिणाम प्रतिविम्बितश्चेत् प्रमाणम्। विषयेति-बुद्धिपरिणामसम्बन्धविषयरूपचैत्य-प्रतिविम्बितश्चेत् फलं गीयते। वृत्तिं विना अज्ञानजन्यशब्दाद्यवच्छिन्नश्चेत् परमात्मैव प्रमेयो गीयते।

प्रकृतमनुसरति ब्रह्मणश्चेति। चिदाभासात् निरुक्तफलात्। उपाध्यन्तर्गतत्वे सति औपाधिकपरिच्छेदशून्यत्वे च सति बहिःस्थितस्वरूपकत्वम् प्रतिविम्बत्वम्। विम्बवारणाय आद्यं। घटाकाशादिवारणाय द्वितीयं उपाध्यन्तर्गततदवयववारणाय तृतीयम्। उपाध्यनन्तर्गतत्वे सति उपाध्यन्तर्गतरूपाभिन्नबहिःस्थितत्वं विम्बत्वमिति विम्बप्रतिविम्ब-विभागः। पुनः गुरुमतमाश्रित्य आशङ्का समाधत्ते एतेनेत्यादि।

## मुक्तिदीपिका

अविद्यारूपावरणसत्त्व इत्यादि—तथाहि अविद्या नाम विक्षेपावरणशक्तिद्वयस्वभावा, विक्षेपशक्तिसहकारेण सा लिङ्गादिब्रह्माण्डान्तजगत्प्रसूतिः, आवरणशक्तिसहकारेण च सा अन्तःकरणप्रच्छादनद्वारा स्वरूपप्रमाप्रतिरोधिनीति। तच्च शक्तिद्वयं अविद्यायाः स्वाभाविकं, तत् सर्व्वं व्यक्तं वेदान्तप्रकरणेषु। इत्यञ्च अविद्यायाः सत्त्वे तदावरणशक्तेरपि तत्स्वभावभूताया अवश्यमभ्युपगन्तव्यतया तया एव अन्तःकरणप्रच्छादनादशक्यमेव ब्रह्मसंवेदनमिति, स्वभावनाशे स्वरूपनाशप्रसङ्गेन सत्यामविद्यायामावरणशक्तेरपोहितुं कथमप्यशक्यत्वादिति ध्येयम्।

बुद्धिवृत्तिचिदाभासावित्यादि—पञ्चदश्यां बुद्धिवृत्तीत्यत्र बुद्धितत्स्थेति आभासौ तु इत्यत्र आभासेनेति च पाठो दृश्यते, उभयोः फले साम्यात् न विचारः। एतेन वचनेन आत्मनि फलव्याप्यत्वं नास्ति, परं अनात्मन एव फलव्याप्यत्वं वृत्तिव्याप्यत्वञ्चेति तात्पर्य्येनानुसन्धेयम्। आत्मनो वृत्तिव्याप्तिसत्त्वे फलव्याप्त्यसत्त्वे च मानं पञ्चदश्यां यथा— "ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता"। (७।९२) इति। "फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निवारितम्।" (७।९०) इत्यादि च।

दुःखनिवृत्तिनिदानतयेति—तथा च दुःखनिवृत्तिरूपेष्टसाधनताज्ञानेन अविद्यानिवृत्तौ इच्छाया उपपत्तिरिति भावः। एतेन दुःखनिवृत्तिरूपफलेच्छाप्रयुक्तेच्छाविषयत्वस्य अविद्यानिवृत्तौ सत्त्वात् गौणप्रयोजनत्वमुपपादितं भवति।

अजन्यमपीति—तथाहि परमतेऽपि अजन्ये प्रागभावे विनाशप्रतियोगित्वस्य सिद्धत्वेन विनाशप्रतियोगित्वे जन्यताव्याप्यत्वमशक्यवचनमिति प्रकृते अजन्ये अविद्यापदार्थे विनाशप्रतियोगित्वं नानुपपन्नमिति। मतान्तरे तु प्रागभावस्य भावभिन्नस्य तथात्वेऽपि भावरूपस्य तथात्वे मानाभावात् भावरूपाया अविद्यायास्तथात्वाङ्गीकारो नैव घटते, तदुक्तम् सांख्याचार्य्यैः सांख्यसूत्रे "विरुद्धोभयरूपा चेत्" "न तादृक्पदार्थाप्रतीते"रित्यादि। अविद्याया भावरूपता च "अज्ञानं नाम सदसद्भ्यामनिर्व्वचनीयं त्रिगुणात्मकं ज्ञानविरोधि भावरूपं यत्किञ्चित्"। इत्यादिना वेदान्तसारादौ व्यक्ता।

भट्टानामिवेति—तथाहि भट्टमते ज्ञानेन विषये ज्ञातता उत्पाद्यते, सा स्फूर्त्तिः प्रकटता चेत्यनर्थान्तरं, तया हि व्याप्त्यादिप्रत्यक्षानन्तरं ज्ञानस्य अनुमानं, तावतैव च प्रामाण्यानुमानमपीति। तदुक्तं जगदीशेन तर्कामृते "भट्टमते ज्ञानस्यातीन्द्रियत्वेन ज्ञानमनुमेयं यथा, तथा तद्वृत्तिप्रामाण्यञ्च; तथाहि 'अयं घटः' इति ज्ञानानन्तरं घटे ज्ञातता उत्पद्यते, ततो ज्ञातो मया घट इति ज्ञाततापत्यक्ष"मित्यादि "प्रामाण्यानुमान"मित्यन्तम्। "भट्टानां मते ज्ञानमतीन्द्रियं ज्ञानजन्यज्ञातता प्रत्यक्षा, तया च ज्ञानमनुमीयत" इति सिद्धान्तमुक्तावल्यामपि।

स्वत एवेति—ननु कारणान्तरप्रयोज्या, तस्यैव स्वप्रकाशत्वात् स्वप्रकाशपदवाच्यत्वात्। नित्यतया सदातनतयेत्यर्थः, संसारदशायामसत्त्वे तादृशनित्यत्वव्याघातापातादिति भावः।

केचित्त्रिदण्डैकदण्डिशब्दयोरर्थमेवं व्याचक्षते यथा, अत्र त्रयः दण्डा येषामिति व्युत्पत्त्या वक्ष्यमाणत्रिदण्डिशब्दनिष्पत्त्या त्रिदण्डिशब्देन दण्डत्रयवन्त इत्यर्थो लभ्यते। त्रयो दण्डाश्च—वाग्दण्डः, कायदण्डः, मनोदण्डश्चेति। तदुक्तं दक्षेण—"वाग्दण्डे मौनमातिष्ठेत् कायदण्डे त्वनीहता। मानसस्य तु दण्डस्य प्राणायामो विधीयते"। इति। एकदण्डी ज्ञानरूपैकदण्डयुक्तः, तदुक्तं परमहंसोपनिषदि त्रिदण्ड्यपेक्षया एकदण्डित्वप्रतिपादनावसरे "ज्ञानदण्डो धृतो येन एकदण्डी स उच्यते। काष्ठ-

दण्डो धृतो येन सर्व्वाशी ज्ञानवर्ज्जितः। स याति नरकान् घोरान् महारौरवसंज्ञकान्।" इति। अज्ञानतत्कार्य्ययोर्दमनहेतुत्वात् ज्ञानस्यापि दण्डत्वम् इति। कात्यायनस्तु—"तत्र परमहंसा नाम एकदण्डधरा मुण्डाश्च कौपीनवाससोऽव्यक्तलिङ्गा अव्यक्ताचारा अनुन्मत्ता उन्मत्तवदाचरन्तः शिखा यज्ञोपवीतत्रिदण्डकमण्डलुकपालानाञ्च त्यागिन" इत्यादिकमाह।

**शिवरामटीकोपरि**—पौनरुक्त्येन शाब्दबोधानुपपत्तिरिति—अवेदमवधेयम्,—उद्देश्यतावच्छेदकविधेयतावच्छेदकत्वाभिमतयोः ऐक्ये अभेदेन शाब्दबोधो न भवति, तदुक्तमनुमितिनिरूपणग्रन्थे गदाधरेण "अत्र जगतः पालनादिकर्तृत्वं न अकारादिपदार्थतावच्छेदकं, उद्देश्यतावच्छेदकपरमपदार्थोत्कर्षस्यापि तद्रूपतया अन्वयानुपपत्ते"रिति। तथा च अत्र इत्थं प्रतिबध्यप्रतिबन्धकभावः कल्पनीयः, यथा—उद्देश्यतावच्छेदकतासम्बन्धेन शाब्दं प्रति अभेदसम्बन्धावच्छिन्नविधेयतावच्छेदकं तादात्म्येन प्रतिबन्धकम्। तेन घटो घट इति वाक्यात् न शाब्दबोधः। घटो नीलघट इत्यादिवाक्येभ्यो विधेयांशे अधिकावगाहिशाब्दबोधानुपपत्तिवारणाय उद्देश्यतावच्छेदकताप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन शाब्दं प्रति तादृशविधेयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकरूपस्यैव निष्कर्षे प्रतिबन्धकत्वमास्थेयम्। नीलघटो घट इत्यादिशाब्दबोधवारणाय सम्बन्धगर्भे उद्देश्यतावच्छेदकताप्रतियोगिकत्वमात्रम् इत्यादूह्यम्। व्युत्पत्तिवादे गदाधरस्तु "घटाद्यंशे विशेषणतावच्छेदकविधया नीलादिभाननियामकनीलाद्युपस्थितितात्पर्य्यज्ञानविशेषादिघटितैव सामग्री घटत्वावच्छिन्नविशेष्यकनीलघटत्वाद्यवच्छिन्नाभेदान्वयबोधप्रयोजिका, तदभावादेव घटो घट इत्यादिषु न तादृशशाब्दबोधापत्तिरिति केषाञ्चिन्मतमाह स्म।

जीवन्मुक्तस्य देहतद्धर्म्मसत्त्व इति—अत्र "जीवन्नेव हि विद्वान् संहर्षायासाभ्यां विमुच्यते" "विमुक्तश्च विमुच्यते" "चक्रभ्रमिवद्धृतशरीरः" इत्यादिकं मानमवगन्तव्यम्। सुखदुःखाभावान्यत्वेत्युपलक्षणं सुखसाक्षात्कारान्यत्वमपि हेतुदले प्रवेश्यम्, सुखसाक्षात्कारस्यापि मुख्यप्रयोजनत्वस्य प्रस्तुतपूर्व्वत्वादिति निरुक्तमेवाधस्तात्। आद्यमिति—उपाध्यन्तर्गतत्वे सतीति दलम्, तथा च विम्बस्य उपाध्यन्तर्गतत्वशून्यत्वात्

नातिव्याप्तिः। द्वितीयमिति औपाधिकपरिच्छेदशून्यत्वे सतीति दलं, तथा च घटाकाशादेः घटादिरूपोपाधिभिः परिच्छेदात् न तत्राप्यतिव्याप्तिरिति।

मातुर्मानेत्यादिः—मातुः स्वाधिष्ठानबुद्धिस्थचिदाभासरूपात् प्रमातुः मानाभिनिष्पत्तिः मानस्य साभासान्तःकरणवृत्तिरूपस्य अभिनिष्पत्तिः उत्पत्तिर्भवतीति शेषः। निष्पन्नं [उत्पन्नं तत् मानं मेयं प्रमेयं घटादिरूपं एति प्राप्नोति। किञ्च तन्मानं मेयाभिसङ्गतं प्रमेयेन सम्बद्धं सत् मेयाभत्वं मेयसमानाकारतां प्रपद्यते इत्यर्थः। उक्तवचनद्वयं पञ्चदशीयम्। तत्रैव वचनान्तरमपि तदर्थमुपलभ्यते यथा—"मूषासिक्तं यथा ताम्रं तन्निभं जायते तथा। रूपादीन् व्याप्नुवच्चित्तं तन्निभं दृश्यते ध्रुवम्।" इति (पञ्च—४।२८)। वेदान्तपरिभाषायामपि "तत्र यथा तड़ागोदकं छिद्रान्निर्गत्य" इत्यादिसन्दर्भे ह्ययमेवार्थ उपलभ्यते।

## তাৎপর্য্যবিবরণ

বৈদান্তিকের মধ্যে একদণ্ডী ও ত্রিদণ্ডী নামে দুইটী প্রকার আছে. তন্মধ্যে একদণ্ডী বৈদান্তিকগণ শিখা ও যজ্ঞোপবীতাদি ধারণ করেন না, ত্রিদণ্ডী বৈদান্তিকগণ শিখা ও সূত্রাদি ধারণ করেন। আর ত্রিদণ্ডীদিগের মতে উপাধিরও বাস্তবিকতা আছে; ঘটাদিব্যবহারের প্রতি অবিদ্যাপরিণাম বিষয় কারণ। একদণ্ডিমতে উপাধি ত্রিকালমিথ্যা, অতএব ঘটাদিব্যবহারে বিষয় কারণ নহে; তত্তদাকারক অনাদিসংস্কারই কারণ ইত্যাদি। কেহ বলেন যে বাগ্দণ্ড কায়দণ্ড ও মনোদণ্ড যে বৈদান্তিকগণ অবলম্বন করিয়াছেন, তাহারা ত্রিদণ্ডী, এবং যাহারা একমাত্র জ্ঞানদণ্ড ধারণ করিয়াছেন তাহারা একদণ্ডী। বাগ্দণ্ড মৌন, কায়দণ্ড নিরীহতা, ও মনোদণ্ড প্রাণায়াম।

একদণ্ডী বৈদান্তিকগণ বলেন যে, ব্রহ্ম যে উপাধি হইতে মুক্ত হইয়া বিশুদ্ধতা লাভ করেন অর্থাৎ বৈষয়িক প্রতিবিম্বাদি গ্রহণ করেন না, সেই উপাধির অপগমই কৈবল্য। ব্রহ্মের উক্ত উপাধির নাম অবিদ্যা, অন্য

কোনও পদার্থ নহে, ঐ অবিদ্যার নিবৃত্তিই কৈবল্য বা মোক্ষ। দুঃখ বুদ্ধিনামক অন্তঃকরণের ধর্ম্ম, ঐ বুদ্ধির কারণ অবিদ্যা যখন বিনাশ প্রাপ্ত হয়, তখন বুদ্ধিও নিবৃত্ত হয় এবং আশ্রয়ের বিনাশ হেতু বুদ্ধির আশ্রিত বা আধেয় দুঃখও নাশ প্রাপ্ত হইয়া থাকে। অতএব অবিদ্যার নিবৃত্তি দুঃখনিবৃত্তির প্রধান অনুকূল বলিয়া মুখ্য প্রয়োজনরূপ দুঃখনিবৃত্তির উপায়-রূপে অবিদ্যানিবৃত্তি লোকের কাম্য হওয়ায় উহা গৌণপ্রয়োজন হইতে কোনও বাধা নাই।

ঐ অবিদ্যা একটী অতিরিক্ত পদার্থ, জ্ঞানের অভাবাদিস্বরূপ নহে। ন্যায়দর্শনাদিমতে যেমন প্রাগভাব উৎপত্তিরহিত হইয়াও বিনাশশীল, ঐরূপ অবিদ্যা উৎপত্তিরহিত হইয়াও ব্রহ্মজ্ঞানোৎপত্তির পর নাশ প্রাপ্ত হয়। অবিদ্যারূপ আবরণের সত্ত্বাবস্থায় কিরূপে ব্রহ্মসংবেদন বা ব্রহ্মজ্ঞান উৎপন্ন হইতে পারে, ইহার উত্তর এই যে,ব্রহ্মসংবেদন ব্রহ্মাকার অন্তঃকরণ-বৃত্তি, বৃত্তিনামক অন্তঃকরণের পরিণামই বিষয়ের আবরণরূপ অবিদ্যার নিবৃত্তি সাধন করে। প্রাচীন গ্রন্থকার ভারতীতীর্থবিদ্যারণ্য পঞ্চদশী-গ্রন্থে বলিয়াছেন যে, বুদ্ধিবৃত্তি ও চিদাভাস এই দুই বস্তুই ঘটের সহিত সম্বদ্ধ হয়, তন্মধ্যে বুদ্ধিবৃত্তি দ্বারা ঘটের অজ্ঞান নষ্ট হয়, এবং চিদাভাস প্রযুক্ত ঘট প্রকাশিত হয়।" উহা দ্বারাই বুঝা যায় যে, অবিদ্যা অন্তঃকরণ-বৃত্তির বিরোধী নহে, কিন্তু বিষয়ের স্ফূর্ত্তির বিরোধী। উক্ত স্ফূর্ত্তি প্রকটতানামক পদার্থবিশেষ। ভট্টের মতে যেমন প্রকটতা অতিরিক্ত পদার্থ, এমতেও সেইরূপ।

এখন প্রশ্ন হইতেছে এই যে, যদি ব্রহ্মপদার্থ অন্তঃকরণবৃত্তির বিষয় হয়, তবে উহা স্বপ্রকাশ চৈতন্যরূপ এই সিদ্ধান্তের সহিত বিরোধ ঘটে, কারণ যাহার প্রকাশ কেবল নিজ হইতেই হয়, অপর কারণ অপেক্ষা করে না, তাহাকেই স্বপ্রকাশ বলা যায়; এস্থলে ব্রহ্মের প্রকাশ অন্তঃকরণ-বৃত্তি হইতে হইতেছে। ইহার উত্তর এই যে, স্বতই যাহার স্ফূর্ত্তি হয় অর্থাৎ

বৃত্তিব্যাপ্য বিষয়ে চিৎপদার্থের প্রতিবিম্বসম্বন্ধ ব্যতীত যাহার স্ফূর্ত্তি হয়, উহাই স্বপ্রকাশ, জড়াত্মক প্রপঞ্চের ঐরূপ স্বপ্রকাশতা নাই, কিন্তু ফল হইতেই উহার প্রকাশ হয়। বৃত্তিব্যাপ্যবিষয়ে চিৎপদার্থের প্রতিবিম্বকেই পারিভাষিক ফলনামে অভিহিত করা হয়। উক্ত বিষয়ে সুরেশ্বরাচার্য্য বলেন—ব্রহ্মপদার্থ অবিদ্যাতীত হইয়া মুনিগণকর্ত্তৃক বিশুদ্ধ বলিয়া কথিত, অজ্ঞানে সংক্রান্তমূর্ত্তি হইয়া সকল প্রপঞ্চের ভাসক বলিয়া কথিত হন এবং অবিদ্যাপ্রসূত অন্তঃকরণে প্রতিবিম্বিত হইয়া প্রমাতা এই নামে কথিত হইয়া থাকেন। অন্তঃকরণবৃত্তিবিশিষ্ট হইয়া প্রমাণনামে কথিত হন এবং বুদ্ধিবৃত্তি ব্যাপ্ত বিষয়ে প্রতিবিম্বিত হইয়া ফল এবং অজ্ঞানজাত শব্দপ্রভৃতি বিষয়াবচ্ছিন্ন হইয়া প্রমেয় নামে আখ্যাত হইয়া থাকেন।" ব্রহ্মপদার্থের স্ফূর্ত্তি স্বতই হয়, চিদাভাস হইতে নহে, কারণ চৈতন্যে চৈতন্যের প্রতিবিম্বপাত হইতে পারেনা। দুইটী কাচের স্বচ্ছতাহেতু যেমন পরস্পর প্রতিবিম্বপাত হয়না, ঐরূপ চৈতন্যপদার্থ স্বচ্ছ বলিয়া চৈতন্যে চৈতন্যের প্রতিবিম্ব কিরূপে হইতে পারে। ইহা দ্বারা ব্রহ্মসংবেদন ব্রহ্মজ্ঞান, অতএব স্ববিষয়ক জ্ঞানরূপ ব্রহ্মভিন্ন আর কিছু নহে, তবে নিত্যতাবশতঃ সংসারদশায়ও উহার সত্তাহেতু তৎকালেও অবিদ্যার নিবৃত্তি হইতে পারে, এ মতও নিরস্ত হইল; কারণ অন্তঃকরণবৃত্তিরূপ ব্রহ্মসংবেদনই অবিদ্যার নিবর্ত্তক বলিয়া সংসারদশায় ব্রহ্মাকার অন্তঃকরণবৃত্তি না থাকায় তৎকালে অবিদ্যানিবৃত্তির আপত্তি হইতে পারে না।

---

## মূলম্।

বিদণ্ডিনস্তু আনন্দময়পরমাত্মনি জীবাত্মনো লয়ো মোক্ষঃ। পরমাত্মজীবাত্মনোরভেদেঽপি উপাধিবিশেষবিশিষ্টস্য

आत्मनो जीवतया तस्यैवौपाधिकः परमात्मभेद इति भेदकोपाधिविरह एव जीवस्य परमात्मनि लयः। यथा घटाकाशस्य घटविगम एव महाकाशे (१) लयः (२), लिङ्गशरीरावच्छिन्नस्यैव आत्मनो जीवभाव इति, लिङ्गशरीरनाश एव पर्य्यवसितो मोक्षः। लिङ्गशरीरञ्च स्थूलशरीरबीजभूतमहदहङ्कारतन्मात्राख्यभूतसूक्ष्मैकादशेन्द्रियसमुदायः। तद्विशिष्टस्यैव आत्मनो दुःखादिमत्तया विशेषणीभूतलिङ्गशरीरस्य नाशे दुःखं नोत्पत्तुमर्हति। विशेषणमत्र अवच्छेदकत्वाख्यसम्बन्धविशेषवत् आश्रयान्तर्भूतं तन्मात्रं वा आश्रयः, सर्व्वथैव तस्य दुःखहेतुत्वात्। एवञ्च तद्विगमस्य दुःखनिवृत्तिहेतुतया पुरुषार्थत्वमक्षतमेवेति। एवञ्च मायाधीनस्य प्रपञ्चस्य मायानिवृत्त्यैव निवृत्तेः (३) मायानिवृत्तेः मोक्षदशायामावश्यकत्वम्, अविद्यैव मायात्वेन एतन्मते परिभाषितेति फलतो न विशेषः।

अत्र न्यायविदः—अविद्या न पदार्थान्तरं मानाभावात्, किन्तु अदृष्टमेव तत्त्वज्ञानरूपविद्याविरोधितया अविद्येत्युच्यते। अदृष्टव्यक्तीनां सादित्वेऽपि तत्प्रवाहस्य अनादितया अविद्याया अनादिताप्रवादः, तथा च तन्निवृत्तिस्तदधीनदुःखनिवृत्तिर्व्वा मोक्ष इति निष्प्रत्यूहमेव।

---

(१) शुद्ध आकाशे इति (क) (ग) (ङ) पुस्तकेषु।

(२) तस्य लय इति (ग) (ङ) (च) पुस्तकेषु।

(३) तस्या निवृत्तेः इति (ख) पुस्तके।

## शिवराम-टीका

आनन्दमयेति—लवणमयं व्यञ्जनमितिवत् प्राचुर्य्यार्थकमयटा आनन्द-प्रचुरेत्यर्थः। लयो नाम अधिष्ठानीभूतपरमात्ममात्रत्वं, सिद्धान्ते अध्यस्तनाशस्य अधिष्ठानमात्रत्वात्। एकदण्डिमते उपाधेर्मिथ्यात्वेन ब्रह्मणि जीवाभेदः सदैव, एतन्मते तु उपाधेः सत्यत्वेन मुक्तिदशायामेव ब्रह्मणि जीवस्य अभेदो, भेदश्च तस्मिन् तस्य संसारदशायामिति भेदा-भेदावव्याप्यवृत्ती इत्यभिप्रेत्याह परमात्मजीवात्मनोरिति। कुत्र उपाधिमाह लिङ्गशरीरेति। विभज्य स्वरूपमाह लिङ्गशरीरञ्चेति। तन्मात्रेति तन्मात्राख्या इत्यर्थः। भूतसूक्ष्मेति—आकाशवायग्निजल-पृथिवीसूक्ष्मेत्यर्थः। एकादशेन्द्रियाणि श्रोत्रत्वक्चक्षूरसनाघ्राणवाक्-पाणिपादपायूपस्थमनांसि।

ननु लिङ्गशरीरनाशस्य सुखदुःखाभावान्यतया कथं पुरुषार्थत्व-मित्यत आह तद्विशिष्टेत्यारभ्य अक्षतमित्यन्तेन। लिङ्गशरीरं दुःखा-देराश्रयतावच्छेदकम् आश्रयो वा इत्युभयथैव प्रकृताक्षतेरित्याह विशे-षणं सति। अवच्छेदकतेत्यस्य प्राक् स्ववृत्तिभोगेति पूरणीयम्। आश्रयान्तर्भूतं आश्रयकोटिनिविष्टं आश्रयतावच्छेदकमिति यावत्। तन्मात्रं लिङ्गशरीरमात्रम्। मुक्तिमात्रे एकदण्डिमते संवादं वक्तुमाह एवमपीति। इत्यञ्च एतन्मतद्वयमेकोक्त्या दूषयति अविद्येति। माना-भावादिति अत्र वेदान्तविदो विवरणार्थ्याविवादपदं प्रमाण-ज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्त्यस्वदेशगतवस्त्वन्तर-पूर्व्वकं अप्रकाशितार्थप्रकाशत्वात् अन्धकाराव्यवहितोत्पत्तिकप्रदीप-प्रभावदित्याद्यनुमानं प्रवदन्ति। इदमित्याकारकप्रमाणवृत्तौ सुखादि-प्रमायां साक्षिचैतन्यरूपायाञ्च वाधवारणाय वृत्तिप्रागभावेन वृत्ति-जनकादृष्टेन वृत्तिप्रतिबन्धकादृष्टेन विषयगताज्ञातत्वेन च अर्थान्तरवार-

णाय क्रमशः षट्पदीव्यावृत्तिरूह्या, गौरवभयान्नेह प्रपञ्च्यते। अप्रका-शिते अर्थे प्रकाशत इति व्यवहारप्रयोजकत्वे सति प्रकाशपदसङ्केतवत्त्वा-दिति हेतोरर्थः। तेन नामकरणवशात् कस्मिंश्चित् पुरुषे चक्षुःसंयोगादौ च न व्यभिचारः। अन्धकाराव्यवहितोत्पत्तिके अन्धकारे प्रथमोत्पन्ने-त्यर्थः। तेन न द्वितीयादिप्रभायां साधनवैकल्यम्।

## मुक्तिदीपिका

त्रिदण्डिनो भास्कराचार्यमतावलम्बिनो वेदान्तिकाः, अपरे टङ्कद्रमिडगुहदेव-भारुचि-यामुनाचार्य्यादयोऽपि त्रिदण्डिवेदान्तिनः श्रूयन्ते। भट्टभास्करो हि भेदाभेद-सिद्धान्तवादी ; यदुक्तं भट्टोजिदीक्षितेन वेदान्ततत्त्वविवेकटीकाविवरणे "भट्टभास्करस्तु भेदाभेदवेदान्तसिद्धान्तवादी" इति। अन्यत्रापि च "एकदण्डी त्रिदण्डी वा" इत्यादि-स्मृतिभिः सम्प्रदायभेदद्वयमङ्गीकृतं दृश्यते।

दक्षेण तु "वैणवेन त्रिदण्डेन न त्रिदण्डीति कथ्यते। अध्यात्मदण्डयुक्तो यः स त्रिदण्डीति कथ्यते। वागादिदण्डयुक्तस्तु प्रत्यगात्मन्यवस्थितः। परब्रह्मणि लीनो यः स त्रिदण्डी व्यवस्थितः।" इत्युक्तिभिः त्रिदण्डिस्वरूपवर्णना प्रस्तुता। त्रिदण्डिनः आचारपराः तदुक्तं भास्कराचार्य्येण स्वभाष्ये "स्मृतौ च मननादौ त्रिदण्डयज्ञोपवी तादि-नियमात् उत्तमाश्रमः स्वरूपतो धर्मतश्च निर्ज्ञात इति नातिप्रसङ्गः" इति। "सर्व्वा-पेक्षा च यज्ञादिश्रुतेरश्ववत्" इत्यादिसूत्रविवरणप्रसङ्गेन तथैवोक्तं यस्य "क्वापि कर्म्मत्यागो नास्ती"त्यादि। अन्यत् ततः स्वयमूह्यम्। एकदण्डिनां विशेषो विष्णुनोक्तो यथा—"निरुदका ध्यानसन्ध्या वाक्कायक्लेशवर्ज्जिता। सन्धिनी सर्व्वभूतानां सा सन्ध्या ह्येकदण्डिनाम्।" इति

लिङ्गशरीरावच्छिन्नस्यैवेति—एतेन पूर्व्वकल्पेन सह नाविद्योपाधिताप्रयुक्तभेदः, एतन्मते लिङ्गशरीरस्यैव जीवोपाधितया तन्नाशेनैव आत्मनः शुद्धतापरावृत्त्या तन्नाशस्य मोक्षत्वेनापि मोक्षावस्थायां न शुद्धब्रह्मरूपताबाधः। दुःखं नोत्पत्तुमर्हतीति—दुःखादि-रूपे कार्य्ये लिङ्गशरीरस्य हेतुतया तन्नाशे कारणव्यतिरेकात् कार्य्यव्यतिरेक इति नियमेन दुःखाद्युत्पादासम्भव इति भावः। न विशेष इति न भेदः। तथाहि लिङ्गशरीर-

कारणीभूताया मायापराभिधानाया अविद्याया: सत्त्वे लिङ्गशरीरविगमासम्भवेन तद्विगमार्थमवश्यं मायानिवृत्ति: कल्पयितव्या, इत्थञ्च मायानिवृत्तेरावश्यककल्पनाया एव मोक्षत्वमस्मिन्नपि कल्पे नैव विरुद्धमर्थं परिपुष्णाति इति भाव:।

मानाभावादिति—मायायाश्चक्षुरादिप्रमाणागोचरतया प्रत्यक्षादिप्रमाणैस्तद्व्यवस्थापनमशक्यमिति भाव:। अथ मास्तु प्रत्यक्षं, परं शास्त्रसिद्धैव सा स्यादित्याकाङ्क्षायां शास्त्रमपि अन्यार्थतया गतार्थयति किन्त्वदृष्टमेवेत्यादिना। तथाहि नञ: षट्स्वर्थेषु सिद्धेषु विरोधरूपस्यार्थस्य प्रकृते परिग्रहेण विद्याविरोधिदुरदृष्टमेव अविद्याशब्दार्थ:, तेन अविद्यानिवृत्तिर्मोक्ष इत्ययमपि कल्पो दुरितनाशस्य मुक्तित्वमर्य्यादामेवानुकूलयतीति, अत एवाह 'तथाच तन्निवृत्ति'रित्यादि।

**शिवराम-टीकोपरि**—अध्यस्तनाशस्येत्यादि—रज्जुविवर्त्तसर्पनाशस्य रज्जुमात्रत्ववदिति भाव:। अभाष्यवृत्ती इति। एकत्रैव दशाभेदेन भेदाभेदयो: सत्त्वात् अमात्यैकालिकत्वाच्च इति। सुखदु:खाभावान्यतरयेति अत्रापि पूर्व्ववदुपलक्षणम्, पुरुषार्थत्वमिति मुख्यप्रयोजनत्वमित्यर्थ:, अन्यथा व्यभिचारात्। अन्यत् स्वयमूहनीयम्।

## তাৎপর্য্যবিবরণ

ত্রিদণ্ডী বৈদান্তিকগণ বলেন যে, আনন্দময় পরব্রহ্মে জীবাত্মার লয়ই মোক্ষ। পরমাত্মা ও জীবাত্মার পরস্পর ভেদ না থাকিলেও লিঙ্গশরীররূপ উপাধিবিশিষ্ট আত্মাকেই জীবনামে অভিহিত করা হয় বলিয়া পরমাত্মাতে জীবাত্মার ঔপাধিক ভেদ রহিয়াছে। অত এব ভেদসাধক উপাধির বিগম হইলেই পরমাত্মার সহিত আর উহার ঔপাধিক ভেদও থাকে না বলিয়া ঐ উপাধির অপগমই পরমাত্মাতে জীবাত্মার লয়, যেমন ঘট যখন নষ্ট হয়, তখনই ঘটাকাশ মহাকাশে লীন হয়, ঘটাকাশ বলিয়া আর বিভিন্নরূপে কোনও বস্তু প্রতীত হয়না, ঐরূপ লিঙ্গশরীর নষ্ট হইলেও পরমাত্মাতে জীবাত্মার লয় হইয়া যায়, তখন আর ব্রহ্মভিন্ন জীবাত্মা বলিয়া কোনও বস্তু থাকেনা। অতএব লিঙ্গশরীরের নাশই পর্য্যবসানে মোক্ষ বলিয়া প্রতীত হয়।

স্থূলশরীরের কারণীভূত মহত্তত্ত্ব অহঙ্কারতত্ত্ব এবং শব্দ স্পর্শ রূপ রস গন্ধ এই তন্মাত্রপঞ্চক জ্ঞানেন্দ্রিয়পঞ্চক কর্ম্মেন্দ্রিয়পঞ্চক ও মন এই কতিপয়পদার্থ মিলিত হইয়া লিঙ্গশরীর উৎপন্ন হইয়া থাকে। দুঃখাদি উৎপন্ন হইতে গেলে উক্তলিঙ্গশরীরবিশিষ্ট আত্মাতেই উৎপন্ন হয় বলিয়া লিঙ্গশরীরের নাশে আর দুঃখাদি উৎপন্ন হইতে পারেনা। লিঙ্গশরীরকে যে আত্মার বিশেষণরূপে ব্যবহার করা হয়, উহা অবচ্ছেদক অর্থেই ব্যবহার করা হইয়া থাকে, অর্থাৎ ঐ লিঙ্গশরীর দুঃখাদির আশ্রয়ের অন্তর্গত অর্থাৎ একদেশ, কিম্বা আশ্রয়। সকল প্রকারেই উহা দুঃখের কারণ বলিয়া স্থির করা যায়। অতএব উক্ত লিঙ্গশরীরের নাশ দুঃখনিবৃত্তির কারণ বলিয়া উহার পুরুষার্থতাবিষয়ে কোনও বাধা নাই। উক্তরূপেও মায়ার নিবৃত্তিবশতই মায়াধীন প্রপঞ্চের নিবৃত্তি হয়, কিন্তু অন্য প্রকারে হয়না বলিয়া মোক্ষ অবস্থায় মায়ানিবৃত্তি একান্ত আবশ্যক। এই মতে অবিদ্যাকেই মায়া বলা হয়, অতএব পূর্ব্বকল্পের সহিত এই মতে মোক্ষ বিষয়ে ফলের কোনও বৈষম্য দৃষ্ট হয়না, কারণ পূর্ব্বকল্পেও অবিদ্যানিবৃত্তিকে মোক্ষ বলা হইয়াছে এমতেও ফলে তাহাই হইয়া পড়িতেছে।

এখন এইস্থলে নৈয়ায়িক সম্প্রদায় বলেন যে, তোমরা অবিদ্যানামে যে একটী অদ্ভুত নূতন পদার্থ স্বীকার করিতেছ, উহা প্রমাণাসিদ্ধ। শাস্ত্রে যে অবিদ্যাশব্দের প্রয়োগ পাওয়া যায়, উহার অর্থ বিদ্যার অর্থাৎ তত্ত্বজ্ঞানের বিরোধী দুরদৃষ্ট, নঞের প্রসিদ্ধ ছয়টী অর্থের মধ্যে বিরোধ অর্থ লইয়া বিদ্যাশব্দের সহিত সমাস করিলেই উক্ত অর্থ পাওয়া যাইতে পারে, ঐ দুরদৃষ্ট তোমাদের মতেও অসিদ্ধ নহে। অদৃষ্টপদার্থ জন্য হইলেও উহার প্রবাহ অনাদি বলিয়াই অবিদ্যাকে অনাদিনামে অভিহিত করা হয়। অতএব উক্ত দুরদৃষ্টের নিবৃত্তি বা তজ্জনিত দুঃখের নিবৃত্তিই মোক্ষ, এবিষয়ে কোনও বাধা দেখা যায় না।

---

## मूलम्

यत्तु अविद्यानिवृत्त्या बुद्ध्यादिनिवृत्तौ तद्धर्मस्य दुःखस्य निवृत्तिरिति, तदपि न युक्तिपथमारोहति, बुद्धेः सुखदुःखाद्याश्रयत्वे तस्याः विनाशे मानाभावात्। न च दुःखात्यन्तोच्छेदानुरोधात् तन्नाशोपगमः, तत्सत्त्वेऽपि अदृष्टोच्छेदादेव दुःखप्रवाहविच्छेदसम्भवात्। न च आश्रयनाशं विना अशेषादृष्टनाश एवानुपपन्नः, आश्रयसत्त्वेऽपि समानाधिकरणतत्त्वज्ञानादेव अशेषादृष्टनाश-(१) सम्भवात्, भवन्मतेऽपि अविद्यानाशे तद्धेतुताया आवश्यकत्वात्। पुनरदृष्टानुत्पत्तिश्च वासनादिविरहात् योगिनां बुद्ध्यादिसत्त्वेऽपि अदृष्टानुत्पत्त्या भवन्मतेऽपि अदृष्टस्य वासनाहेतुकत्वात्। अथ अविद्यायाः पदार्थान्तरत्वे चेद् विद्वेषः, तदा मा भूत् तस्याः तथात्वं, अदृष्टं मिथ्याज्ञानाहिता (२) वासनैव वा भवत्वविद्या, तत्त्वज्ञानन्तु अदृष्टनाशे न साक्षाद्धेतुः, अपितु बुद्धिनाश (३) एव बुद्धेर्ज्ञानाद्याश्रयतया तत्त्वज्ञानस्य आश्रयतारूपसाक्षात्सम्बन्धस्य नाशकतावच्छेदकतया लाघवात् अदृष्टे सामानाधिकरण्यरूपपरम्परासम्बन्धेनैव तत्त्वज्ञानसत्त्वात् तस्य तन्नाशकत्वे नाशकतावच्छेदकप्रत्यासत्तिगौरवात्; नच प्रतियोगिनिष्ठप्रत्यासत्त्या ज्ञानस्य अदृष्टनाशकत्वोपगम (४) एव गौरवं, नाशाधिकरण-

---

(१) अशेषनाश (ङ) पुस्तके। (२) मिथ्याज्ञानोपहित (क) पुस्तके।
(३) एवैवम (ग) पुस्तके। (४) बुद्धेर्विनाश एव (ख) (च) पुस्तकयोः।

निष्ठसाक्षात्सम्बन्धे नैव तस्य तन्नाशं प्रति हेतुत्वमुपगन्तव्यमिति वाच्यम्, तथा सति नाशप्रतियोगित्वनियामकाभावेनातिप्रसङ्गा-पातात्। एवं वासनानाशे तत्त्वज्ञानस्य पृथक्कारणता-कल्पनेनापि न्यायमते गौरवं, तन्नाशादेव अदृष्टनाशवत् वासनानाशोपपत्तेः तत्त्वज्ञानस्य पृथक्कारणतानुपगमात्। अदृष्टादिनाशे च बुद्धिविनाशस्य कारणतायां नाधिक्यम्, आश्रयनाशस्य आश्रितनाशं प्रति कॢप्त-कारणतयैव (५) उपपत्तेः। तथाच तज्जीवोपाधिविगमोऽपवर्ग इत्येत-देवोचितमिति चेन्न बुद्धितत्त्वस्य अनादित्वे विनाशानुपपत्तेः भावनाशे जन्यत्वेन प्रतियोगिनो हेतुत्वात्। सादित्वे च बुद्धि-धर्म्माद्दृष्टप्रवाहस्यापि सादितया प्रथममदृष्टवैचित्र्यं भोगादि-तत्कार्य्यवैचित्र्यञ्च न स्यात्। न च अदृष्टजनककृतिवैचित्र्या-ददृष्टवैचित्र्यं प्रथमतः सम्भवति, प्रथमतः कृतिवैचित्र्यप्रयो-जकस्यैव दुर्लभत्वात्, तस्मादद्दृष्टसमवायिनो नित्यत्वमेव अनादिविचित्राद्दृष्टप्रवाहात् पुंसां (६) भोगवैचित्र्यमिति।

## शिवराम-टीका

"क्लेशकर्म्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वर" इत्यादिपात-ञ्जलमतमुपन्यस्यति यत्त्विति। प्रकृते अर्थेति। वासनैव वेति—एतेन मन्मते अविद्यायाः कल्प्यात्वेनानुपस्थित्या विनिगमनाविरहात् [ इः ] भवन्मते च पापं वा पुण्यं वा संस्कारो वा अविद्येति विनिगमनाविरह इति कटाक्षितम्। साक्षात्सम्बन्धे नैव आश्रयतासम्बन्धे नैव। गौरवं

---

(५) कॢप्तत्वात् (ख) पुस्तके।

(६) वैचित्र्यमपि (ख) (च) पुस्तकयोः।

बुद्धिनाशात् बुद्ध्याश्रिताद्दृष्टादेर्नाशाङ्गीकारादिति शेषः। नाशप्रतियोगित्वनियामकाभावेन नाशाधिकरणनिष्ठप्रत्यासत्त्या कार्य्यकारणभावेनेति शेषः। तन्नाशादेव बुद्धिनाशादेव। निरुक्तमतत्रयमेव सम्यगित्युपसंहारव्याजेनाह तथाचेति। जीवोपाधिविगमोऽविद्यानाशः

मतमेतद्दूषयति बुद्धितत्त्वस्येति। बुद्धेरनादित्वे भावनाशं प्रति जन्यत्वेन हेतुताभङ्गभिया तस्या जन्यत्वे विजातीयभोगजनकीभूत- विजातीयादृष्टजनकविजातीयबुद्धेरभावी बुद्धितत्त्वपूर्व्वमदृष्टवैचित्र्याभावादिति भावः। न चेति सम्भवतीत्यत छेदः। नैयायिकः स्वमतमुपसंहरति तथा चेति। अनादीति—तथा च प्राथमिकादृष्टस्याप्रसिद्ध्या तद्वैचित्र्यविचारः काकदन्तपरीक्षणवदिति भावः। पूर्व्वमते विचित्रशक्तेरविद्याया एव अनादित्वाददृष्टादेः सादितया अनादित्वस्य वक्तुमशक्यत्वादिति बोध्यम्।

## मुक्तिदीपिका

यत्त्वित्यादिसन्दर्भः आश्रयीभूताविद्यानाशेन बुद्ध्यादिनिवृत्तौ तदाश्रितदुःखादिनिवृत्तिरित्यभिमानिनां केषाञ्चन मतखण्डनपरः, नतु पातञ्जलमतनिरासपरः, तन्मते सत्त्वपुरुषान्यताप्रतीतिविरोधितद्भेदप्रतीतिप्रयोज्यबुद्धिस्थदुःखभोगाभावरूपकैवल्यस्य तादृशान्यताप्रतीतिहेतुकत्वस्याङ्गीकारात् नत्वाश्रयीभूताविद्यानाशादिहेतुकत्वस्य इति केचित् व्याकुर्व्वन्ति तन्न विचारसहं "ततः क्लेशकर्म्मनिवृत्ति"रिति सूत्रे व्यासदेवेन स्वभाष्ये "तल्लाभादविद्यादयः क्लेशाः समूलकाषं कषिता भवन्ति, कुशलाकुशलाश्च कर्म्माशयाः समूलघातं हता भवन्ति, क्लेशकर्म्मनिवृत्तौ जीवन्नेव विद्वान् विमुक्तो भवति" इति सन्दर्भेण अविद्यानिवृत्तेर्मोक्षहेतुत्वस्य पातञ्जलसम्मतत्वकीर्त्तनात्। तत्रैव विज्ञानभिक्षुणापि "ननु दुःखात्यन्तनिवृत्तिरेव मोक्ष" इत्यादि सन्दर्भेण तथाविधमुक्तित्वस्यापि प्रतिपादनाच्च इत्यादिकमूह्यम्। यच्च "पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति" योगसूत्रं तदपि मोक्षदशायां बुद्धिपुरुषयोरवस्था-

